[ सर्वविषयक–शास्त्रिपरीक्षा–निर्धारित– ]

# सूक्त-रत्न-सङ्ग्रहः



सायण–भट्टभास्कर–स्कन्द–महीधर–शत्रुघ्न–श्रीमिश्राद्याचार्य-

रचनाभिः सनाथीकृतः ।

[ अत्युत्तमं प्रामाणिकं परीक्षोपयोगि आदर्शभूतं संस्करणम् ]

'वैदिकसार्वभौम'निर्देशेन

'आचार्य-श्रीमिश्र' इत्येतेन सम्पादितः ।

अ/२०

# सूक्त-रत्न-सङ्ग्रहः

अर्थात्—

'गवर्नमेन्ट संस्कृत कालेज बनारस' संबन्धिशास्त्रिपरीक्षानिर्धारितेषु वरुणसूक्त-उषःसूक्त-विष्णुसूक्तद्वय-शान्त्यध्याय-पृथ्वीसूक्तेषु सूक्तर्षि-च्छन्दो-देवता-विनियोगपरिचयपूर्वकं सूक्तसार-प्रश्नपत्र-समन्वितं यथोपलब्ध-सायण-भट्टभास्कर-स्कन्द-महीधर-शङ्कर-श्रीमिश्राद्याचार्यरचनानां परिष्कृतमादर्शभूत-मत्युत्तमं परीक्षोपयोगि संस्करणम्।

सम्पादकः—

ज्योत्स्नाविवृति-पीयूषभाष्य-पीयूषकणिका-विरचयिता,

**आचार्यः पं० श्रीगोपालचन्द्रमिश्रः**

[वेदाचार्यः, धर्मशास्त्राचार्यः, मीमांसादर्शनाचार्यः, वेदतीर्थः, धर्मतन्त्रकेसरी, प्राध्यापकश्च]



| मूल्यम् | संवत् | पृष्ठसंख्या |
| --- | --- | --- |
| १।) | २००७ वि. | २४० |

प्रकाशकः—
श्रीगोपालचन्द्रमिश्रः, काशी.
प्रथमं संस्करणम्
मुद्रकः—
अच्युतमुद्रणालयः, काशी.

पुस्तकप्राप्तिस्थानम्—
१. श्रीमदनमोहनमिश्रः,
२० नीचीब्रह्मपुरी बनारस १.
२. सर्वाणि च काशीस्थ-
संस्कृतपुस्तकविक्रयस्थानानि ।

## आचार्यश्रीमिश्रस्य सूक्त-रत्न-सङ्ग्रहः ।

पुस्तकमिदम्—
........................मण्डलान्तर्गत [ पो० .................... ]
..............................................................ग्रामनिवासिना
श्री..............................................................नामधेयेन
........................दिने समधिकृतम् ।

**अवधेयम्—**

अन्येषां पुस्तकविक्रेतॄणाम् आदेश (आर्डर) दानसमये 'आचार्यश्रीमिश्रस्य सूक्त-रत्न-सङ्ग्रहः' इत्यवश्यं लेखनीयम्, अन्यथा श्रीमद्भिरन्यदेव पुस्तकं प्राप्स्यते ।



पूज्यपाद गुरुवर महायाज्ञिक वेदाचार्य

**पं० श्रीभगवत्प्रसादमिश्र**

प्रोफेसर गवर्नमेण्ट संस्कृत कालेज, बनारस

H. C. P.

## अत्र हि—





समस्तमन्त्रसंख्या १४०; समस्तपृष्ठसंख्या २४०;

# मङ्गलम्

१

अग्ने नय सुपथा राये अस्मान्,
विश्वानि देव वयुनानि विद्वान् ।
युयोध्यस्मज्जुहुराणमेनो,
भूयिष्ठां ते नमउक्तिं विधेम ॥

—शु० य० ५।३७;

२

विनायकः कर्मविघ्नसिद्ध्यर्थं विनियोजितः ।
गणानामाधिपत्ये च 'स मे देवः प्रसीदतु' ॥

—या० स्मृ० १।२७१;

३

गणपतिमीशं करुणा—वरुणालयमन्तरायपूगहरम् ।
श्रीश्यामं भगवन्तं भव-भय-दुःखच्छिदं वन्दे ॥

❀ श्रीः ❀

# प्रास्ताविकम्

अथ परमेशितुर्भगवतो विश्वनाथस्यानुकम्पया राजकीय-संस्कृतमहाविद्यालयीयायां सर्वविषयकशास्त्रिपरीक्षायामनिवार्यत्वेन निर्धारितानां वैदिकानां सूक्तरत्नानां सङ्ग्रहात्मकोऽयं ग्रन्थो यथायथं सायण-भट्टभास्कर-स्कन्द-महीधर-शत्रुघ्ना-द्याचार्यविरचितभाष्यभासुरः, पृथ्वीसूक्ते च चमत्कृतस्य पीयूषभाष्यस्य निष्यन्दभूतया पीयूषकणिकाख्यया व्याख्यया सनाथीकृतो वेदार्थमधिजिगांसूनामाह्लादपूर्वकं सुखावबोधाय 'चन्द्र'स्य ज्योत्स्नया विभूषितश्च श्रीमताङ्करकमलयोरुपस्थाप्यते ।

पूर्वस्मिन् हि काले—

*'योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम् ।*
*स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥'*

इत्यप्रमादं परिपाल्यते स्म भगवतो मनोः *'स्वाध्यायोऽध्येतव्यः'* इति ( श. ब्रा. ११।५।७।२ ) श्रुतिमूलकः ( म. स्मृ. २।१६८ ) समादेशः । परमिन्द्रियविषयसुखलालसाभिभूतया मानुषवृत्त्या, क्रमेण ह्रसीयस्त्वमुपगत आचारधर्मे, आचारानवधानतया च जागृतवति प्रमादालस्येर्ष्यालोभकाममोहादावाध्यात्मिकताविरोधिनि विपद्गणे, व्यापृतवत्यां च शरीरसंरक्षणपालनमात्राभिलाषायां हा हन्त ! समजनि वेदानां तदुपबृंहकाणां परमपुरुषार्थप्रापयितॄणां विद्यानामध्ययनाध्यापनसमुच्छेदो द्विजेषु । तथापि—

*'विद्या ह वै ब्राह्मणमाजगाम गोपाय मा शेवधिष्टेऽहमस्मि ।'*

इति ( निरु. २।४ द्र. मनुः २। ११४ ) विद्यावचनमनुस्मरन्नयं ब्राह्मणवर्गो कृच्छ्रादिव संस्कृतसाहित्यशास्त्राणि संरक्षति स्म । परमद्यत्वे सोऽपि लौकिकव्यवहारस्यार्थैकमात्रसाध्यत्वात्,

'ब्राह्मणस्य हि देहोऽयं क्षुद्रकामाय नेष्यते।
कृच्छ्राय तपसे चेह प्रेत्यानन्तसुखाय च॥' ति

भगवत (भा० ११।१७।४२) उक्तिमनुस्मरन्नपि 'सर्वारम्भास्तण्डुलप्रस्थमूलाः' इति व्यवहारन्यायपरवशो,

यस्य राज्ञस्तु विषये श्रोत्रियः सीदति क्षुधा।
तस्यापि तत्क्षुधा राष्ट्रमचिरेणैव सीदति।'
'आवृत्तानां गुरुकुलाद् विप्राणां पूजको भवेत्।
नृपाणामक्षयो ह्येष निधिर्ब्राह्मोऽभिधीयते॥'

(मनुस्मृ० ७।१३४;८२)

इत्यनुशासनमुपेक्षितवति प्रजापालवर्गे, चटशाला (प्राइमरी-स्कूल) बटुशाला (मिडिलस्कूल) पाठशाला (हाईस्कूल) विद्यालय (इन्टरकॉलेज) महाविद्यालय (डिग्रीकॉलेज) विश्वविद्यालय (युनिवर्सिटी) प्रभृति आचटशालं संस्कृताध्यापनेऽपि स्वीकृते सर्ववर्णप्रवेशे च,

'अजीवँस्तु यथोक्तेन ब्राह्मणः स्वेन कर्मणा।
जीवेत् क्षत्रियधर्मेण स ह्यस्य प्रत्यनन्तरः॥
उभाभ्यामप्यजीवस्तु कथं स्यादिति चेद्भवेत्।
कृषिगोरक्षमास्थाय जीवेद्वैश्यस्य जीविकाम्॥'

[मनुस्मृ० १०।८१-८२]

'विद्या शिल्पं भृतिः सेवा गोरक्ष्यं विपणिः कृषिः।
धृतिर्भैक्ष्यं कुसीदं च दश जीवनहेतवः॥'

(मनुः १०।११६)

इति स्मृत्यनुशासनमनुसृत्य सैनिकत्वं (पुलिसकार्य) कृषकत्वं (खेती, जमीन्दारी) भृतकाध्यापकत्वं (पढ़ानेकी नौकरी) शिल्पित्वं (कारीगरी इंजिनियरिङ्ग आदि) भृत्यत्वं (नौकरीपेशा) शुश्रूषुत्वं (चापलूसी, दरबानी, चपरासीपन आदि) गोरक्ष्यं

( डेहरी व्यवसाय ) वाणिज्यं ( व्यापार ) धृतिः [ न्यूनमूल्येनापि कार्याङ्गीकरणं ] ( सस्ती बेगारी ) भैक्ष्यम् ( भिखमंगी ) इत्यादि सर्वविधजीवनोपायेषु यथावकाशं प्रवेशं निश्चिकाय, समुदाचरञ्च तत्र सक्रियं प्रयत्नं साफल्याय। एवञ्च वृत्तिसाङ्कर्येण किङ्कर्तव्यविमूढतया स्थितवति जनेऽपि भृतकाध्यापकत्वकामिभिर्द्विजोत्तमैरेव कथञ्चिदुपास्यमानान्यतः पोषणमनुपलभमाना, वृद्धेव—प्रौढग्रन्थाध्ययनाध्यापनविरहेणापगतवीर्या, परीक्षाप्रमाणपत्रमात्राङ्गयष्टिः, सीदद्दरिद्रब्राह्मणबालकमनीषात्मपरिगृहीतदण्डा, धृतकलह-प्रमादा-लस्ये-र्ष्यानुचितकारित्वप्रवादादिनैकविधमल-ग्लानकृतिरूपकुचैलेयं भारतस्य प्राणभूता संस्कृतविद्या कथङ्कथमप्यूर्ध्वश्वासमुत्सृजन्ती दृक्पथमवतरति। तदेवं शिथिलाप्यमीषां व्याकरणाद्यङ्गानां भारभरेणाकुलितेयमृग्यजुःसामविदां तादृशादरविरहेण परीक्षाक्रमे स्वातन्त्र्येणाध्ययनाध्यापनयोरदृश्यप्रायत्वाद् वाक्*प्राण-मनोभिर्मूर्च्छितेव परिदृश्यते। तदेवमेतस्याः शीर्णजीर्णायाः संस्कृतविद्यायाः सर्वतोभावेन पुनरपि तारुण्यमभिलष्यद्भिः कैश्चनानुरागिभिर्वाक्प्राणमनसां मूर्च्छामपनेतुमिव कतिपय×सूक्तरत्नानीमान्यध्येतव्यत्वेन निर्दिष्टानि सर्वेषामेव कृते। परमदृष्टाश्रुतपूर्वपाठ्यसन्निवेशेन चकितचकिताः विद्यासमुज्जीवनोत्तरदायित्वनिर्वहणे स्वात्मानमशक्तमिव मन्वानाः 'को वेदः ? किं सूक्तम ? कथं तदध्ययनम?' इत्यादिजिज्ञासापरवशाः कान्दिशीका इवावलोक्यन्ते छात्रा विद्वांसश्च। तदत्र तेषां धैर्यसंवर्धनाय, साहाय्यसम्पादनाय चातिसंक्षेपत एव वेदस्वरूपादिविवेचनमिह प्रासङ्गिकमुपस्थाप्यते।

---

* ऋचं वाचं प्रपद्ये, मनो यजुः प्रपद्ये, साम प्राणं प्रपद्ये' य० ३६ १;

× ऋषि-च्छन्दो-दैवता-र्थादिविधया सूक्तानां बहुविधत्वेऽपि परीक्षायां निर्धारितानि सर्वाण्यपि सूक्तानि प्रत्येकमेकविंशदृष्टत्वादृषसूक्तानि प्रत्येतव्यानि।

# को वेदः ?

सुपरिज्ञातमेवैतद् यद् भारतीयसंस्कृतेर्भारतीयधर्मस्य च मूलं, धर्मार्थकाममोक्षेतिचतुर्विधपुरुषार्थानां साधकम्, ऐहिकामुष्मिकसुखसिद्ध्याश्च निदानम्, आर्यजातीयानां हिन्दूनां परमं प्रमाणं वेदा एवेति। वेदशब्दो ह्ययं 'विद ज्ञाने, विद लाभे, विद सत्तायाम्, विद विचारणे' इति चतुर्भिर्धातुभिर्व्युत्पाद्यते। तत्र सायणाचार्यादयो हि भाष्यकृतः 'वेद्यन्ते ज्ञाप्यन्ते धर्मादिपुरुषार्थचतुष्टयोपाया अनेने'ति ज्ञानार्थकात् 'विद्यन्ते लभ्यन्तेऽनेन पुरुषार्था' इति लाभार्थकाद्वा घञि विशेषतो निर्ब्रुवते। वैदिकैश्च शब्दैः स एवार्थो मुख्यतया बोध्यते यः किल ऋते वैदिकं शब्दं प्रत्यक्षा-नुमानो-पमाना-र्थापत्त्य-नुपलब्धि-सम्भवै-तिह्यादिप्रमाणैर्नोपलब्धुं शक्यते। विहितस्य यागादेः स्वर्गादिफलं, निषिद्धस्य कलञ्जभक्षणादेश्चानिष्टफलं हि न कथमपि केनापि तर्कादिना साधयितुं शक्यते। तस्मादेव च—

*'श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः।*
*ते सर्वार्थेष्वमीमांस्ये ताभ्यां धर्मो हि निर्बभौ॥*
*योऽवमन्येत ते मूले हेतुशास्त्राश्रयाद् द्विजः।*
*स साधुभिर्बहिष्कार्यो नास्तिको वेदनिन्दकः॥'* इति

(२।१०-११)

मनुरुपदिदेश। एतस्मादेव च सम्प्रत्यपि विशुद्धभारतीयहृदया धर्मकृत्यस्यादृष्टं फलमेव सश्रद्धमभिमन्यन्ते। तथाप्येतद् भारतीयं सश्रद्धममीमांसितश्चानुष्ठानमन्धश्रद्धात्वेन मेषसमजत्वेन (भेडियाधसान) वा परिगणयन्ति, परिहसन्ति चाभारतीयशिक्षासंस्कारसंस्कृता मनस अनीशितारोऽपि मनीषिशब्दाभिधेयाः। परमिह अप्रामाण्याधायकविप्रतिपत्तिमन्तरा,

सम्भावितविप्रतिपत्तीनाञ्च ससंरम्भं मीमांसकाचार्यैर्निरस्तत्वात् प्रत्यक्षानुमानाद्यविषयतामात्रेण तदिदं श्रुतीनां प्रामाण्यं नापह्नोतुं शक्यते स्वजनकविषयकजनश्रुतेरिव। अत एव च—

*'प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते।*
*एतं विदन्ति वेदेन तस्माद्वेदस्य वेदता॥'*

( ऋ० भा० भू० २ )

*'इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकमुपायं यो ग्रन्थो वेदयति स वेदः'* इति वेदलक्षणमनुसन्धाय

*'आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना।*
*यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः॥'*

इति तार्किकप्रवराणां कृते भेषजमुपदिदेश ( १२।१०६ ) मनुरेव। एवञ्चामीमांस्यतया सिद्धप्रमाणोऽलौकिकार्थवेदयिता वेदो ग्रन्थराशिरूपोऽस्माभिराद्रियते। ग्रन्थराशिपरश्च वेदशब्दः, *'वेदोऽसि'* ( शु० य० सं० २।१ ) इत्यादौ समुपलभ्यमानादुञ्छादिगणपठितत्वेनान्तोदात्तात् कुशमुष्टिवाचिनो वेदशब्दाद्विभिन्नः, *'यस्मिन् वेदा निहिताः'* ( अथ० ४।३५।६ ) *'यः समिधा य आहुती यो वेदेन ददाश मर्तो अग्नये'* (ऋ. ८।१९।५) इत्यादिषु प्रयुज्यमान आद्युदात्तः पाणिनिना वृषादिगणे परिगणय्योपदिश्यते।

## चातुर्विध्यम्

सोऽयं ग्रन्थराश्यात्मको वेदः-मन्त्रः, ब्राह्मणमिति द्विधा विभिद्यते। तत्रोभयत्राप्यरण्येऽध्येतव्यो भाग आरण्यकम्, विशुद्धाध्यात्मविद्याप्रतिपादको ब्रह्मज्ञानसाधको भागश्चोपनिषदिति कीर्त्यते। तदेवं मन्त्रब्राह्मणात्मको वेदः ऋग्-यजुः-सामा-थर्व नामभिश्चतुरात्माधुनोपलभ्यते। चतुष्ट्वव्यपदेशश्चायं प्रतिद्वापरमिवास्मिन्नपि द्वापरयुगान्ते ह्रसितायुषो मन्दमतींश्च पुरुषानव-

लोक्य कृपापरेण भगवता कृष्णद्वैपायनेन कृतोऽन्वर्थितं चैक्यमाप्तस्य वेदस्य व्यासकारित्वाद्वेदव्यास इति नाम। तत्रैकत्वेनावस्थितेऽपि वेदे 'पादेनार्थेन चोपेता वृत्तबध्दा मन्त्रा ऋचः। गीतिरूपा मन्त्राः सामानि। वृत्त-गीतिवर्जितत्वेन प्रश्लिष्टपठिता मन्त्रा यजूंषि' इति लक्षणविधया ऋग्यजुःसामशब्दास्तु व्यवह्रियमाणा एवासन्। अत एव चामुं गद्य-पद्य-गानात्मकरीतित्रयमुपलक्ष्य प्रवृत्तस्त्रयीशब्दः सर्वत्र प्रचलितोऽधुनापि वेदमात्रे प्रयुज्यते। वेदव्यासेन च चतुर्धाकरणसमये—

'ऋचां त्वः पोषमास्ते पुपुष्वान् गायत्रं त्वो गायति शक्वरीषु।
ब्रह्मा त्वो वदति जातविद्यां यज्ञस्य मात्रां विमिमीत उ त्वः॥'

इति (ऋ० १०।७१।११) श्रुतिमुपजीव्य होत्रध्वर्यूद्गातृब्रह्मेति चतुर्णां गणप्रधानपुरुषाणां तत्तद्गणाध्येतव्यमन्त्रसमुदायानां पृथक् पृथक् सङ्ग्रहस्त्रय्यात्मक एव ऋग्यजुःसामाथर्वनामभिः प्रसारितः। तत्र ब्रह्मणः कृताकृतावेक्षणकार्यकारित्वात्, कृताकृतावेक्षणे चान्यवेदीयपदार्थज्ञानस्यावश्यकत्वाद्, ब्रह्मत्वोपदेशोऽन्यवेदेष्वपि यावदपेक्षितः पठ्यते। गणाध्येतव्यमन्त्रसङ्ग्रहरूपत्वाच्चैकैकस्यर्गादेर्वेदस्य मन्त्रभागेऽपि पूर्वकथितानां नियताक्षरपादावसानानामृचाम्, अनियताक्षरपादावसानानां यजुषां च सर्वत्र साङ्कर्यमुपलभ्यते। एवं च—'द्रव्य-देवता-त्यागात्मयज्ञस्वरूपबोधको वेदभागो यजुर्वेदः। यजुर्वेदविहितयागापेक्षित-शस्त्र * तदङ्गादियावदपेक्षिताङ्गकलापसमर्पको वेदभागः ऋग्वेदः। स्तोत्र × तदङ्गकलापसमर्पकश्च वेदभागः साम। कर्मच्छेदसन्धानबोधकः शान्तिकपौष्टिकाभिचारिकादिकर्मप्रतिपादकः क्षुद्रजनीनसर्वविधाभिलाषसंपूरणपरश्च वेदभागोऽथर्ववेदः।' इति वक्तुं शक्यते।

---

* अप्रगीतमन्त्रसाध्या स्तुतिः शस्त्रम्।

× प्रगीतमन्त्रसाध्या स्तुतिः स्तोत्रम्।

# शाखाः

तदेवं चतुर्धाङ्कुरितोऽपि वेदवृक्षो क्रमेणायुर्वेद-धनुर्वेद-गान्धर्ववेदा-र्थवेदाख्यैरुपवेदैरुपस्कृतः शिक्षा-कल्प-व्याकरण-निरुक्त-छन्दो-ज्यौतिषेति षड्भिरङ्गैः, पुराण-न्याय-मीमांसादिभिरुपाङ्गैरालबालायितः,

*'एकविंशत्यध्व [ २१ ] युक्तमृग्वेदमृषयो विदुः ।*
*सहस्राध्वा [१०००] सामवेदो यजुरेकशता [१०१] ध्वकम् ।*
*नवधार्थर्वणोऽन्ये तु प्राहुः [६ वा १५] पञ्चदशाध्वकम् ॥'*

इति बह्वीभिः शाखाभिरुपबृंहितः समुपासकानां मनांसि तोषयति ।

तत्र सम्प्रति ऋग्वेदे हि—शाकलशाखा, वाष्कलशाखा चेति शाखाद्वयमुपलभ्यते । यजुर्वेदश्च शुक्ल-कृष्णभेदेन द्विधा विभिन्नः । तत्र शुक्लयजुर्वेदे माध्यन्दिनशाखा, काण्वशाखा चेति शाखाद्वयम्; कृष्णयजुर्वेदे च तैत्तिरीया, मैत्रायणी, कठशाखा चेति शाखात्रयम्; सामवेदे च कौथुमी, जैमिनीया, राणायनीया चेति शाखात्रयम्; अथर्ववेदे च शौनकीया, पैप्पलादीया चेति शाखाद्वयं समुपलभ्यते । एवं मन्त्रमात्रमुपजीव्य द्वादशभिः शाखाभिरादित्यैरिव विद्योतते हि वेदराशिर्भारतीयानां सर्वस्वम् । समुपलब्धब्राह्मणानि, सूत्राणि चावलम्ब्य तु इतोऽप्यधिकानां शाखानां स्थितिरिह सम्प्रत्यपि वक्तुं शक्यते । तत्र कस्यां शाखायां किं वैशिष्ट्यम् ? किम्मूलकश्च शाखाभेदः ? किं च तस्याः समुपलभ्यमानं मन्त्र-ब्राह्मणा-रण्यको-पनिष-च्छिक्षा-कल्प-व्याकरणादि-साहित्यम् ? कीदृशस्तत्र तत्र विभागः ? कति मन्त्राः ? तत्तन्नामप्रसिद्धौ च को हेतुः ? को हि ऋषिः ? किं छन्दस्तत्त्वम् ? को हि देवतापदार्थः ? कश्च विनियोगहेतुः ? एकत्र विनियुक्तं चान्यत्र कथं

विनियोक्तुं शक्यते ? अष्टक-मण्डल-सूक्ता-ध्याया-नुवाक-वर्गादि-शब्दप्रवृत्तौ को हेतुः ? को मन्त्रः ? किं ब्राह्मणम् ? ब्राह्मणानां वेदत्वमस्ति न वा ? मन्त्राणामानर्थक्यमप्यस्ति न वा ? अर्थभेदे च किं मूलम् ? कथं चार्थपरीक्षणं न्याय्यम् ? प्रतिपाद्यस्य सम्यग्वचनपरः स्तुतिप्रधानो मन्त्रसमुदायः सूक्तम् । तच्च ऋषि-छन्दो-दैवता-र्थभेदेन वैविध्यं भजते । तच्च कुतः ? कुत्र ? कथम् ? इत्यादि सुबहु वक्तव्यमप्यन्यत्रास्माभिर्विस्तरशो निरूपणीयमिति पिष्टपेषणभिया, साम्प्रतिकपरीक्षार्थिनां परीक्षोत्तीर्णतामात्रैककामित्वाच्च नेह विव्रियते ।

एवं कथं तदध्ययनमित्यस्मिन्नपि विषये साम्प्रदायिकपद्धति-निरूपणं न परीक्षार्थिनामुपकृतिमाविर्भावयतीति मन्त्रस्थपदानां भाष्यानुसृतस्यार्थस्यात्मसात्करणपूर्वकं मन्त्राणां तदन्तर्गतानां च व्याख्यानं स्वदेवगिरा हिन्दीभाषया च यथा लेखितुं पार्येत, यथा च कस्यापि सूक्तस्य सूक्तान्तर्गतानां कतिपय-मन्त्राणां वा समुचितः सारो बोधयितुं शक्येत, यथा च भाष्य-कृदुक्तानामृषीणां सामान्येनैतिह्यनिरूपणेन स्वस्येतिहासवित्त्वं प्रख्याप्येत, यथा च मन्त्रार्थनिरूपणे स्वीयो नवीनः प्राचीनो वा प्रामाणिकः पन्थाः सहेतु व्यवस्थाप्येत, यथा च मन्त्रपाठा-धीताः सन्धयो विच्छेत्तुं कल्प्येरँस्तथैवाध्येतव्यमित्येवात्र संक्षिप्य निरूपणीयतामासादयति ।

## एतत्प्रकाशनं वैशिष्ट्यं च

तदमीषां सूक्तरत्नानां संभवत्यपि नैकविधे प्रकाशने, एतत्प्रकाशनं चन्द्रस्य षोडशकलाभिरिव १–नैकविधभाष्यनियोजनेन, २–भाष्यगतव्याकरणांशस्य पृथग्व्यवस्थापनेन, ३—प्रमुख, भाष्यान्तःस्थितमन्त्रपदानां स्थूलाक्षरसन्निवेशेन, ४–(क) परित्यक्तमन्त्रपदानां ( ) चिह्नान्तःस्थापनेन, (ख) अन्यत्रावस्थित-

यावदपेक्षितभाष्यस्य समुल्लेखेन, ५–प्रमुखभाष्यानुकूलया हिन्दीभाषया, ६–सन्धिविच्छेद-स्थिरस्पष्टार्थप्रत्यायकेनान्वययोगेन, ७-तत्र चानुषङ्गबोधकेन ' ' चिह्नेन, अध्याहारबोधकेन ( ) च लक्ष्मणा, ६–नूलव्यावहारिकेक्षणाध्वपरिदर्शकेन सूक्तसारेण, १०–नूतनरीतिककलापूर्णमुद्रणेन, ११–शिरःस्थापितमन्त्रसंख्यया, १२–साम्प्रदायिकवर्गानुवाकाद्यवान्तरभागसंस्थापनेन, १३–कायापेक्षया स्वल्पतमेन मूल्येन, १४–हिन्दीभाषातः प्रथमस्थापितविषयनिर्देशकपुष्पिकया १५–प्रामाणिकेन स्वसंबद्धवैदिकपदार्थपरिचयेन १६–अनुभूतिप्रकाशन ( Notes ) पत्रेण च कमप्यभिनवं वैशिष्ट्यमुद्वहतीति नातितिरोहितं स्यात्प्रेक्षावतां विदुषाम् । एतद्धि सान्वयहिन्दीभाषा-सूक्तसारादिभिः परीक्षार्थिनामुपकृतिमाचरद्, विशेषतः सूक्तर्षिच्छन्दोदेवताविनियोगपरिचायनैः अध्यापकानां समुकृतये, वैदिकतत्त्वजिज्ञासूनामनुसन्धातॄणां तत्र विशेषप्रवृत्तये च सम्भविष्यतीत्येतत्प्रयासस्य साफल्यमनुमिनोमि ।

अथ च वैदिकसार्वभौम-महायाज्ञिक पण्डितपुरन्दर-गुरुवर-श्री ६ श्रीभगवत्प्रसादमिश्र-वेदाचार्य (प्रोफेसर-गवर्नमेन्ट संस्कृत कालेज बनारस ) महोदयानां निर्देशेन समुपक्रान्तेऽस्मिन् पुस्तकप्रकाशने मुद्रणानवधानादिप्रयुक्त्या सञ्जातानां विसर्गविन्द्वक्षरहीनताद्यशुद्धीनां कृते क्षमापयन्, तदशुद्धिसूचनाय संसूचयन् वेदविद्या-तद्विज्ञजनकृपाकटाक्षमाशास्ते,

| | | |
|---|---|---|
| वाराणसी | } | भावत्क एव विद्वज्जन— |
| गीताजयन्ती | | चरणपङ्कजश्रद्धालुः— |
| २००७ वि० | | श्रीगोपालचन्द्रमिश्रः |

———

# प्रश्नपत्रम्

१९५१

## शास्त्रिपरीक्षायाम्, १ वर्षे १ पत्रम् ।

---

समयः—घण्टात्रयम् संपूर्णाङ्काः—५०

( अनिवार्यसंस्कृतसाहित्यम् )

वारुणौषसवैष्णवपार्थिवसूक्तेषु यजुर्वेदस्य षट्त्रिंशत्तमाध्याये च प्रश्नाः

१. अधोलिखिता मन्त्राः साधु व्याख्यायन्ताम् । ···१०

(क) मानो वधाय हत्नवे जिहीडानस्य रीरधः। मा हृणानस्य मन्यवे।

(ख) यतो यतः समीहसे ततो नो अभयङ्कुरु ।
शन्नः कुरु प्रजाभ्योऽभयन्नः पशुभ्यः ॥

(ग) अहमस्मि सहमान उत्तरो नाम भूम्याम् ।
अभीषाडस्मि विश्वाषाडाशामाशां विषासहिः ॥

२. अधोलिखितेषु पदेषु दशानां पदानामर्थान् विलिखत ···१०

मिनीमसि । सदोहविर्धाने । किमीदिनः । च्छदसे । व्युच्छन्ती । ज्योक् । अप्नः । सुमज्जानये । शिपिविष्टः । अनृत्तरा । स्वरवः । सुमेके । विष्ठाः । मत्सत् ।

३. निम्नलिखितेषु मन्त्रेषु चतुर्णां मन्त्राणां स्वदेवगिरा व्याख्या कार्या — २०

(क) व्यञ्जिभिर्दिव आतास्वद्द्यौदप कृष्णां निर्णिजं देव्यावः।
प्रबोधयन्त्यरुणेभिरश्वैरोषा याति सुयुजा रथेन ।

(ख) किमित्ते विष्णो परिचक्ष्यं भूत्प्र यद्ववक्षे शिपिविष्टो अस्मि।
मा वर्पो अस्मदपगूह एतद्यदन्यरूपः समिथे बभूथ ॥

(ग) यां रक्षन्त्यस्वप्ना विश्वदानीं देवा भूमिं पृथिवीमप्रमादम्।
सा नो मधु प्रियं दुहामथो उक्षतु वर्चसा॥

(घ) रुशद्वत्सा रुशती श्वेत्यागादारैगु कृष्णा सदनान्यस्याः।
समानवन्धू अमृते अनूची द्यावा वर्णं चरत आमिनाने ॥

(ङ) आ यो विवाय सचथाय दैव्य इन्द्राय विष्णुः सुकृते सुकृत्तरः। वेधा अजिन्वत्त्रिषधस्थ आर्यमृतस्य भागे यजमानमाभजत् ॥

(च) यस्ते सर्पो वृश्चिकस्तृष्टदंश्मा हेमन्तजब्धो भृमलो गुहा शये। क्रिमिर्जिन्वत् पृथिवि यद्यदेजति प्रावृषि तन्नः सर्पन् मोपसृपद् यच्छिवं तेन नो मृड।

(छ) त्वं विश्वस्य मेधिर दिवश्च ग्मश्च राजसि।
स यामनि प्रति श्रुधि ॥

(ज) शन्नो देवीरभिष्टय आपो भवन्तु पीतये।
शंय्योरभि स्रवन्तु नः ॥

४. सूक्तशब्देन किमभिधीयत इति विलिख्य उषःसूक्तस्य वैष्णवयोर्वा सूक्तयोः मन्त्रार्थपर्यालोचनया समवाप्तं स्वाभिप्रायं स्वगीर्वाणवाण्या पञ्चदशभिः पङ्क्तिभिः प्रकाशयत। ···१०

अथवा

निम्नाङ्कितेषु केचन त्रय उत्तरणीयाः

(अ) सूक्तानाममीषामध्ययनमात्रमेव प्रयोजनमुतान्यदपि किञ्चित् ?।

(इ) को हि द्वितीयस्य विष्णुसूक्तस्य ऋषिः ? तस्य विषये किमप्यैतिहासिकं वृत्तं विलिखत।

(उ) यजुर्वेदीयस्य षट्त्रिंशाध्यायस्य सम्प्रदायप्रसिद्धं किमभिधानं ? कश्च तत्र हेतुः ?।

(ऋ) मन्त्राणामर्थनिरूपणाय कीदृशी शैली समभ्यर्हितेति सर्वं सोपपत्तिकं विचारयत।

---

ज्योत्स्नाविवृति-सायणभाष्यसहितम्

# विष्णुसूक्तम् १

[ ऋग्वेदीयं १ मण्डलान्तर्गतं १५६ तमं सूक्तम् ]



वैदिकसार्वभौम—महायाज्ञिक-पं० श्रीभगवत्प्रसादमिश्रवेदाचार्य-

( प्रोफेसर गवर्नमेन्ट संस्कृत कालेज बनारस )

महोदयानां निर्देशेन सम्पादितम् ।

## १

# विष्णुसूक्तम् [ दैर्घतमसम् ]

## [ ऋग्वेदे १ मं० १५६ सू० ]

❀ ज्योत्स्ना ❀

*वैष्णवं सूक्तरत्नं श्रीगुर्वर्क-ज्ञानभा-वतः ।*
*मिश्र-गोपालचन्द्रस्य ज्योत्स्नया संविभूष्यते ॥*

*सूक्तपरिचयः*

विष्णुसूक्तमिदमृग्वेदसंहितायां [ १।१५६ ] प्रथममण्डलान्तर्गतं षट्पञ्चाशदधिकशततमं सूक्तम् । अष्टकनिर्देशक्रमेण [ २।२।२६ ] द्वितीयाष्टके द्वितीयाध्याये षड्विंशतितमो वर्गः । अनुवाकनिर्देशक्रमेण [ १।२१।१७ ] प्रथममण्डलस्य एकविंशेऽनुवाके सप्तदशं सूक्तम् । इदं च दीर्घतमसा महर्षिणा दृष्टेषु त्रिषु वैष्णवसूक्तेषु तृतीयं सूक्तम् । अत्र पञ्च ऋचः ।

*ऋषिपरिचयः*

एतस्य वैष्णवसूक्तस्य दीर्घतमा ऋषिः । ऋग्वेदसंहितायां दीर्घतमसर्षिणा दृष्टानि पञ्चविंशति सूक्तानि । तानि च सर्वाण्यपि प्रथममण्डले चत्वारिंशदधिकशतमितात् [ १४० ] सूक्तादनुक्रमेण चतुःषष्ट्यधिकशततमं [ १६४ ] सूक्तं यावदुपलभ्यन्ते । एतेषु सूक्तेषु सङ्कलनया द्विचत्वारिंशदधिकं द्विशतं [ २४२ ] मन्त्रा भवन्ति ।

इतिवृत्तम्—प्रजापतेरङ्गिरा नाम मुनिरजायत। अङ्गिरसश्च उचथ्यः बृहस्पतिः संवर्त इति त्रयः पुत्रा बभूवुः। 'उचथ्य' इत्ययं पुराणेषु 'उतथ्य' नाम्ना व्यवहृतो दृश्यते। तत्र ज्येष्ठस्योचथ्यस्य भार्गवी 'ममता' नाम भार्याभवत्। तस्यां चायं दीर्घतमा नाम ऋषिरजायत जन्मनान्धः। सोऽयं बहुभिर्ऋङ्मन्त्रैः स्तुत्वाग्न्यादिदेवतास्तत्प्रसादात्प्राप्तचक्षुर्बभूव। अथ कदाचिज्जीर्णशरीरत्वे दुर्बलत्वात् किमपि कर्तुं न शक्नोतीति द्वेषेण परिचरितुमशक्नुवद्भिः स्वगृहदासैरग्नौ दाहाय प्रचिक्षिपे। प्रक्षिप्तोऽसावग्नावश्विनावस्तावीत्। तौ चैनमरक्षताम्। ततोऽम्रियमाणमिममुदकेषु प्रापातयन्। तत्रापि निमग्नः पुनरसावश्विनौ तुष्टाव। तुष्टौ च तौ जलादुदहार्ष्टाम्। एवमवध्यं तं नदीगतमेव त्रैतनो नाम कश्चिद्दासः शस्त्रेण शिरोऽसौ वक्षश्चाविध्यत्। ततोऽपि तमश्विनावपालयताम्। त्रैतनस्तु स्वकृतेन ब्रह्महत्यापातकेन समाक्रान्तः स्वयमेवात्मनोऽङ्गानि न्यकृन्तत्। आश्विभ्यां पालितश्च दीर्घतमा प्रवाहे प्रवहन्नदीभिरङ्गदेशसमीपे समापाद्यत। तत्र क्रीडादेशगतोऽङ्गराजः सर्वज्ञं तमृषिमवगम्य नौकया तटे समवतार्य सम्पूज्य स्वस्यानपत्यत्वात् महर्षेस्तनयं उशिङ्नाम्नि स्त्रियां जातं कक्षीवन्तं नाम पुत्रत्वेन स्वीचकार। कक्षीवानप्ययम् 'औशिज' इति मातृनाम्ना 'दैर्घतमा' इति पितृनाम्ना प्रथितो मन्त्रद्रष्टा ऋषिरासीत्। कक्षीवानिति चान्वर्थनाम एतस्य। तथाहि यास्कः—'कक्षीवान्, कक्ष्यावान्' (६।१०) 'कक्ष्या रज्जुरश्वस्य' (२।२)। अयं भावः—यद्यप्ययं दीर्घतमसो महर्षेः पुत्रत्वाद् ब्राह्मणोचितधर्मैव भवितुमर्हति तथापि अनपत्येन अङ्गदेशाधिपतिना पुत्रत्वेन स्वीकृतः राजधर्मानवापदिति क्षत्रियसम्बन्धादश्वबन्धनरज्जुरूपकक्ष्यावत्वात् कक्षीवानिति नामेति। पुराणेषु दीर्घतमा नाम ऋषिस्तस्य धन्वन्तरिर्नामापत्यमायुर्वेद-

प्रवर्तको विष्णोरवतारभूतो जात इत्यादि तत्र तत्र ( भा० म० पु० ९।१७।४ ) द्रष्टव्यमित्यलमतिप्रसङ्गेन ।

छन्दः परिचयः

सूक्तस्यास्य जगतीच्छन्दः । तल्लक्षणं यथा शौनकीये—
'पञ्चाशज्जगती द्व्यूना, चत्वारो द्वादशाक्षराः ।
तदस्या बहुलं वृत्तम्', ( ऋ० प्रा० १६ । ७४ ) इति ।

कात्यायनीयेऽपि—'सप्तमं जगती जागतपादा ।' 'चतुष्पदाश्चर्चः ।' इति । यस्याश्चत्वारोऽपि पादा द्वादशाक्षरा भवन्ति सा जगतीत्यर्थः । तत्र प्रथमे मन्त्रे—प्रथमे पादे 'शेव्यः', तृतीये 'अर्ध्यः', चतुर्थे 'राध्यः' इत्यत्र 'शेवियः, अर्धियः, राधियः' इति व्यूह्य ( विशिष्टमूहनं विधाय ) द्वादशाक्षरसंख्यापूरणम् । 'इयादिपूरणः[1]' ( पि० छ० ३ । २ ) इति नियमात् । द्वितीये मन्त्रे प्रथमे पादे 'पूर्व्याय' इत्यत्र 'पूर्वियाय' इति व्यूहनम् । चतुर्थे 'सेदु' इत्यत्र 'सः इत्' इति पदे पृथक्कृत्याक्षरसंख्यापूरणं 'व्यूहेदेकाक्षरीभावान् पादेषूनेषु संपदे[2] ।' ( ऋ० प्रा० १७।२२) इत्युक्तेः । तृतीये मन्त्रे प्रथमपादे 'पूर्व्यं' मित्यत्र 'पूर्वियं' मित्यूहः । चतुर्थः पूर्णः । पञ्चमस्य प्रथमे 'दैव्य' इत्यत्र 'दैविय' इति तृतीये 'आर्य' मित्यत्र 'आरिय' मिति व्यूह इति ।

---

१ यत्र छन्दसि पादस्याक्षरसंख्या न पूर्यते, तत्र इय् उव् इत्याद्यागमैः पूरयितव्या । 'तन्वादीनां छन्दसि वेयङुवङौ' इति च कात्यायनीयं वार्तिकम् ( ६।४।८६ ) द्रष्टव्यम् ।

२ अक्षरसंख्यया हीनेषु पादेषु अक्षरसंख्यासंपत्त्यर्थं एकाक्षरीभावान् सन्धीन् व्यूहेत्पृथक्कुर्यादित्यर्थः ।

## देवतापरिचयः

अस्य ( द्वितीयस्य च परीक्षापाठ्यस्य ) सूक्तस्य विष्णुर्देवता। सेयं द्युस्थानीया देवतेति नैरुक्ताः। विष्णुर्हि यज्ञः ( निघं० ३।१७ ); आदित्यश्च ( निघं० ५।६ )। तत्र विवेष्टि (विशेषेणाप्नोति) स्वर्गमनेनेति विगृह्य व्याप्त्यर्थकाद् विष्लृधातोः ( जु० उ० ) 'विषेः किच्च' ( उणा० ३।३७ ) इति नुप्रत्यये विष्णुशब्दो निष्पाद्यते शाब्दिकैः। नैरुक्तास्तु वेवेष्टेः, विशतेः, विपूर्वकादश्नोतेश्च व्युत्पादयन्ति। तथा च निरुक्तम्—'अथ यद्विषितो भवति तद्विष्णुर्भवति। विष्णुर्विशतेर्वा व्यश्नोतेर्वा।' अस्यार्थः—अथ यदा आदित्यो मध्याह्ने रश्मिभिर्विषितो व्याप्तो भवतीति वेवेष्टेर्विष्णुरुच्यते। तीव्ररश्मिद्वारेण सर्वत्र ह्याविशतीत्यर्थे विश प्रवेशने (तु० प०) धातोः, विश्वं रश्मिभिर्व्यश्नुत इत्यर्थे विपूर्वका'दशूङ् व्याप्तौ' धातोर्वा विष्णुशब्दः। पौराणिकास्तु विष्णुरिति पालनकर्तारं देवमाचक्षते। तदपि 'सूर्य आत्मा जगतस्तस्थुषश्च' ( ऋ० १।११५।१ ) ति श्रुतेः सूपपन्नमेव। तदिदं देवताया विष्णोर्व्याख्यानम्। जगन्नियन्तुर्विष्णोर्देवतायास्तु महाविष्णुत्वमिति प्राञ्च इति दिक्।

## विनियोगपरिचयः

सूक्तविनियोगः—अस्ति हि ज्योतिष्टोमाख्यः सोमयागः। तत्र अग्निनिष्टोमः, अत्यग्निष्टोमः उक्थ्यः, षोडशी, अतिरात्रः, वाजपेयः, आप्तोर्यामः, इति सप्त संस्थाः। तत्र अग्निष्टोमसंस्थः सोमयागः उत्तरासां षण्णां प्रकृतिः। प्रकृतिर्हि सोच्यते यत्र सर्वेषामङ्गजातानामुपदेशः क्रियते यतश्चान्यत्र धर्मा अतिदेशेन गच्छन्ति। अग्निष्टोमे द्वादश शस्त्राणि पठ्यन्ते। शस्त्रं हि नाम अप्रगीतैर्ऋङ्मन्त्रैः क्रियमाणा देवतास्तुतिः। अग्निष्टोमयागस्य

प्रकृतित्वात् तत एव द्वादशशस्त्रपठनं सर्वास्वपि अत्यग्निष्टोमादिषु षट्सु विकृतियागेषु प्राप्तं भवति। विकृतिश्च यत्र विशेषाङ्गमात्रमुपदिश्यते अपेक्षितानि चाङ्गानि यत्र प्रकृतितो गृह्यन्ते। तत्र तृतीये उक्थ्यसंस्थे ज्योतिष्टोमे प्राकृतानि द्वादश शस्त्राणि त्रीणि चान्यानि शस्त्राणि समधीयन्ते। तत्र विशिष्टेषु स्तोत्रेषु सूक्तमिदं दैर्घतमसं तृतीयस्तोत्ररूपेण तृतीये सवने अच्छावाकनाम्ना ऋत्विजा पठ्यते। अच्छावाकेन पठ्यमानत्वाच्चेदं शस्त्रं अच्छावाकशस्त्रमिति कीर्त्यत इति।

मन्त्रविनियोगः—प्रथममन्त्रविनियोगः। अस्ति द्वादशाह इति नाम्ना यागः। तत्र द्वादशदिनपर्यन्तं प्रधानयागो भवति। सर्वेस्वपि दिवसेषु अग्निष्टोमयागधर्मा प्राप्ता भवन्ति। तत्र प्रकृतिभूते अग्निष्टोमयागे तृतीयसवने चरुर्निष्पाद्यते, सोमाय च देवतायै हूयते। तण्डुलानामदग्धोऽकठिनो विशदः पाकश्चरुः। सोमदैवत्यायाः चरुद्रव्यकाहुतेः प्राक् परस्ताच्च घृतद्रव्येण 'उरु विष्णो' इति मन्त्रेण यागः क्रियते, स एवातिदेशेन द्वादशाहे यागे दशमेऽह्नि प्राप्तः। तत्र 'दशमेऽहनि' इत्युपक्रम्य 'उरु विष्णो इति घृतयाज्यास्थाने भवा मित्रो न शेव्यो घृतासुति' रिति श्रौतसूत्रे ( आश्व० श्रौ० ८।१२ ) उक्तत्वात् 'उरु विष्णो' इति मन्त्रस्थाने 'भवा मित्र' इति मन्त्रः प्रयोक्तव्य इति।

चतुर्थमन्त्रविनियोगः—सोमयागे प्रधानयागात् पूर्वेऽहनि प्राकृताग्निहोत्रशालातः आहवनीयमग्निं यागीयप्रधानद्रव्यं सोमं च आग्नीध्रशालायां नयन्ति। तयोरनयोरग्नीषोमयोर्नयनप्रयोगः 'अग्नीषोमप्रणयन' मित्युच्यते। आहवनीयाग्नेः आग्नीध्रीयधिष्ण्ये स्थापनं तत्र समिद्धोमश्च भवति। होमान्ते होत्रा बहवो मन्त्राः पठ्यन्ते। तत्र 'तमस्य राजा' इति चतुर्थो मन्त्रोऽपि पठनीयः। तथा च सूत्रम् 'तमस्य राजा वरुणस्तमश्विने-

त्यर्धर्च आरमेत्' ( आश्व० श्रौ० ४।१० ) इति। अत्र सूत्रे 'तमस्य राजा वरुणस्तमश्विना' इति पादनिर्देशः 'ऋचं पादग्रहणे' ( आश्व० श्रौ० १।१ ) इति परिभाषितत्वादृङ्मन्त्रमात्रपाठप्राप्त्यर्थः। अग्नीषोमप्रणयनकर्मणि तमस्य राजेति ऋचं समुच्चरेत्, समुच्चरंश्च अर्धर्चे पादद्वयान्ते एव आरमेत् विश्रसेदिति सूत्रार्थः।

१

भवा मित्रो न शेव्यो घृतासुतिर्विभूतद्युम्न एवया उ सप्रथाः।
अधा ते विष्णो विदुषा चिदर्ध्यः स्तोमो यज्ञश्च राध्यो हविष्मता॥

❀ ज्योत्स्ना ❀ [ अन्वयः ] हे विष्णो! मित्रो न शेव्यः भव। घृतासुतिः विभूतद्युम्नः एवयाः सप्रथाः 'भव'। अध ते स्तोमः विदुषा अर्ध्यः चित् ( भवति )। हविष्मता यज्ञः च राध्यः ( भवति )।

[ हिन्दी ] *प्रार्थना तथा मनुष्य का कर्तव्य*—हे विष्णुदेव! आप मित्र की भाँति सुख देने वाले होवें। हमारे लिए वर्षा को वर्षाने वाले, यशस्वी—अन्नवान्, रक्षक, और सबसे विशाल ( उदारहृदय ) बनें। तथा आपके इन गुणों के कारण ही आपकी स्तुति, महिमा के जानने वाले विद्वान् यजमान के द्वारा बढ़ाने योग्य है। अर्थात् आप की महिमा बहुत अधिक है उसे कहते रहना चाहिए, क्योंकि एक बार में पूरी नहीं हो पाती है। और द्रव्यसंपन्न यजमान के द्वारा आपका यज्ञ भी होना चाहिए। अर्थात् आपकी यज्ञ द्वारा उपासना भी अवश्य होती रहनी चाहिए।

❀ *सायणभाष्यम्* ❀

'भवा मित्रः' इति पंचर्चं सप्तदशं सूक्तं दैर्घतमसम्। 'जागतं तु'

इत्युक्तत्वादिदमपि जागतम्। 'वैष्णवं हि' इत्युक्तत्वाद् वैष्णवम्। 'भव पंच' इत्यनुक्रान्तम्। (१) उक्थ्ये तृतीयसवने अच्छावाकशस्त्रे एतत् सूक्तं विनियुक्तम्। 'उक्थ्ये तु होत्रकाणाम्' इति खण्डे सूत्रितं 'भवा मित्रः सं वां कर्मणा' (आश्व० श्रौ० ६।१) इति। (२) सौम्यचरोरुभयतो घृतेन यष्टव्यं, तत्रोपरितने घृतयागे 'उरु विष्णो वि क्रमस्व' इति प्राकृता याज्या। दशमेऽहनि तु तस्याः स्थाने 'भवा मित्रः' इत्येषा प्रयोक्तव्या। 'दशमेऽहनि' इति खण्डे सूत्रितम् 'उरु विष्णो वि क्रमस्वेति घृतयाज्यास्थाने भवा मित्रः' (आश्व० श्रौ० ८।१२) इति।

हे विष्णो! मित्रो न, मितेर्दुःखात् त्राता सखा, आदित्यो वा मित्रः। 'प्रमीतेस्त्रायते' (१०।२१) इति निरुक्तम्, तद्वत्। शेव्यः सुखे साधुः सुखकर्ता। घृतासुतिः घृतमुदकमासूयते येन स तादृशः। यद्वा घृतमाज्यमाभिमुख्येन नीयते यस्मै स तादृशः। विभूतद्युम्नः प्रभूतयशाः प्रभूतान्नो वा। एवयाः रक्षणस्य मिश्रयिता प्रापयिता। सप्रथाः सर्वथा पृथुः। प्रतिविशेषणं नः भव इति संबन्धः। 'द्व्यचोऽतस्तिङः' (पा० सू० ६।३।१३५) इति दीर्घः। उ इति पादपूरणः (निरु०१।९)। हे विष्णो त्वं यस्मादीदृशो भवसि, अध अस्मात् ते तव स्तोमः स्तोत्रविशेषः विदुषा त्वन्माहात्म्यवेदित्रा यजमानेन अर्घ्यः (चित्) पुनः पुनः प्रवर्धनार्हः। एकवारकरणे न संपूर्यते इत्यर्थः। तथा ते यज्ञश्च हविष्मता तेन यजमानेन राध्यः समाराधनीयः। यद्वा विदुषा होत्रा स्तोमो राध्यो हविष्मता यज्ञश्च राध्यः ॥ १ ॥

२

**यः पूर्व्याय वेधसे नवीयसे सुमज्जानये विष्णवे ददाशति।**
**यो जातमस्य महतो महि ब्रवत्सेदु श्रवोभिर्युज्यं चिदभ्यसत् ॥**

❀ ज्योत्स्ना ❀ [ अन्वयः ] यः पूर्व्याय वेधसे नवीयसे सुमज्जानये विष्णवे ददाशति। यः (च) अस्य महतः महि जातं

अवत्, सः इत् उ श्रवोभिः युज्यं चित् अभि असत्।

[ हिन्दी ] *यज्ञ और गुणकीर्तन करने का फल*—जो व्यक्ति पुरातन, विविध जगत्स्रष्टा, नित्य नवीन अर्थात् अत्यन्त रमणीय, स्वयमुत्पन्न या समस्त जगत् को मस्त करनेवाली लक्ष्मी के पति विष्णुदेव के लिए हवि आदि देता है। तथा जो इस महानात्मा विष्णु की पवित्र जन्म लीलाओं को कहता है वह यज्ञादि करने वाला और स्तुति करने वाला भक्त यजमान अन्नवान्, यशस्वी होकर सबसे गमन ( चाहने ) योग्य उसके पद को प्राप्त कर लेता है।

* सा० भा० * यः यो मर्त्यः पूर्व्याय पूर्वकालीनाय नित्यायेत्यर्थः। वेधसे विविधजगत्कर्त्रे नवीयसे नित्यनूतनाय अत्यन्तरमणीयायेत्यर्थः, स्तुत्याय वा। सुमज्जानये स्वयमेवोत्पन्नाय। जनेरौणादिकः इण्। 'सुमत्स्वयमित्यर्थः' ( निरु० ६।२२ ) इति यास्कः। यद्वा सुतरां मादयतीति सुमत्, तादृशी जाया यस्य स तथोक्तः, तस्मै सर्वजगन्मादनशीलश्रीपतये इत्यर्थः। बहुव्रीहौ 'जायाया निङ्' ( पा० सू० ५।४।१३४ ) इति निङादेशः समासान्तः, वलि लोपः। उक्तगुणकाय विष्णवे व्यापकाय ददाशति हविरादिकं ददाति। किंच (यः) अस्य विष्णोः महतः महानुभावस्य महि महत् पूज्यं जातं जन्म उत्पत्तिं, हिरण्यगर्भादिरूपं जन्म, अवत् ब्रूयात्। ब्रवीतेर्लेटि अडागमः। सङ्कीर्तयेत्। सेदु। उ शब्दोऽपिशब्दार्थः। सोऽपि दाता स्तोता च श्रवोभिः अन्नैः कीर्तिभिर्वा युक्तः सन् युज्यं चित् सर्वैर्गन्तव्यमेव तत्पदम् अभि आभिमुख्येन असत् गच्छति प्राप्नोति ॥ २ ॥

३

तमु स्तोतारः पूर्व्यं यथा विद ऋतस्य गर्भं जनुषा पिपर्तन।
आस्य जानन्तो नाम चिद्विवक्तन महस्ते विष्णो सुमतिं भजामहे॥

❀ ज्योत्स्ना ❀ [ अन्वयः ] हे स्तोतारः! तम् उ पूर्व्यं ऋतस्य गर्भं यथा विद, ( तथा ) जनुषा पिपर्तन। अस्य नाम चित् जानन्तः आ विवक्तन। हे विष्णो! महः ते सुमतिं भजामहे।

[ हिन्दी ] कर्तव्य और प्रार्थना—हे स्तोता गण! आप लोग उन श्री विष्णुदेव को अनादि पुरातन, यज्ञात्मा या जल के उत्पादक आदि रूप से जिस प्रकार जानते हैं वैसे ही अपनी जन्मसिद्ध स्वाभाविक वृत्ति से स्तुति द्वारा प्रसन्न कीजिए। तथा इनके नाम के सर्वविध पुरुषार्थ देनेवाले माहात्म्य को जानते हुए सङ्कीर्तन कीजिए। हे विष्णो! महानात्मा आपकी हम अच्छी बुद्धि ( कृपामय-भाव ) की सेवा करते हैं, अर्थात् हम आपकी कृपा के भिक्षार्थी हैं।

❀ सा० भा० ❀ हे **स्तोतारः तमु** तमेव विष्णुं **पूर्व्यं** पूर्वार्हं अनादिसंसिद्धम् **ऋतस्य गर्भं** यज्ञस्य गर्भभूतं यज्ञात्मनोत्पन्नमित्यर्थः। 'यज्ञो वै विष्णुः' ( श० ब्रा० १।१।२।१३ ) इति श्रुतेः। यद्वा ऋतस्योदकस्य गर्भं गर्भकारणम् उदकोत्पादकमित्यर्थः। 'अप एव ससर्जादौ' ( मनु० १।८ ) इति स्मृतेः। एवंभूतं विष्णुं **यथा विद** जानीथ, तथा **जनुषा** जन्मना स्वत एव न केनचित् वरलाभादिना **पिपर्तन** स्तोत्रादिना प्रीणयत, यावदस्य माहात्म्यं जानीथ तावदित्यर्थः। विदेर्लटि मध्यमबहुवचनम्। विद ऋतस्य इत्यत्र संहितायाम् 'ऋत्यकः' इति प्रकृतिभावः। किंच **अस्य** महानुभावस्य विष्णोः **नाम चित्** सर्वैर्नमनीयमभिधानं सार्वात्म्यप्रतिपादकं विष्णुरित्येतन्नाम **जानन्तः** पुरुषार्थप्रदमित्यधिगच्छन्तः, **आ** समन्तात् **विवक्तन** वदत संकीर्तयत। यद्वा नाम यज्ञात्मना नमनं विष्णोरेव सर्वेषां स्वर्गापवर्गसाधनाय इष्ट्याद्यात्मना द्रव्यदेवतात्मना वा परिणामम् आ जानन्तो यूयं विवक्तन ब्रूत स्तुत। वचेर्लोटि छान्दसः शपः श्लुः, बहुलं छन्दसि इति अभ्यासस्य इत्वम्, पूर्ववत् तनादेशः। इदानीं साक्षात्कृत्याह हे **विष्णो**! सर्वात्मक देव! **महः** महतः **ते**

तव सुमतिं सुष्टुतिं शोभात्मिकां बुद्धिं वा भजामहे सेवामहे वयं यजमानाः ॥३॥

४

**तमस्य राजा वरुणस्तमश्विना क्रतुं सचन्त मारुतस्य वेधसः।**
**दाधार दक्षमुत्तममहर्विदं व्रजं च विष्णुः सखिवाँ अपोर्णुते॥**

❀ ज्योत्स्ना ❀ [अन्वयः] मारुतस्य वेधसः अस्य तं क्रतुं राजा वरुणः 'सचते'। तं अश्विनौ (अन्ये देवाश्च) सचन्त। विष्णुः सखिवान् उत्तमम् अहर्विदं दक्षं दाधार, व्रजं च अपोर्णुते।

[हिन्दी] *महिमा का वर्णन*—ऋत्विग्गणों से युक्त बुद्धिमान् यजमान, पूर्वोक्त यज्ञात्मा विष्णु, वरुण और अश्विनी आदि देवताओं की सेवा करता है। विष्णुदेव यजमान आदि यज्ञ करने वाले मित्रों के साथ उत्कृष्ट स्वर्ग और फल देने का सामर्थ्य रखते हैं। तथा जल वरसाने के लिए बादलों को हटा (काट) देते हैं। अथवा–विष्णु के मरुत् देवताओं के उत्पत्तिकार्य [गर्भ के टुकड़े करदेने पर भी सबके जीवित रहने रूप अद्भुत कार्य (भा० म० पु० ६।१८)] को वरुण अश्विनी आदि देवता मानते हैं। वे मित्रवान् (मिलनसार) विष्णुदेव (दिनदहाड़े ज्ञातव्य) स्पष्टरूप के उत्कृष्ट उत्साह को रखते हैं और मेघ को हटा देते हैं।

❀ सा० भा० ❀ अग्नीषोमप्रणयने तमस्य राजा इत्येषा प्रयोक्तव्या। 'अग्नीषोमौ प्रणेष्यत्सु' इति खण्डे सूत्रितं 'तमस्य राजा वरुणस्तमश्विनेत्यर्धर्चं आरमेत्' आश्व० श्रौ० ४।१०) इति।

**मारुतस्य** मरुतामृत्विजां संघातः मारुतम् तद्वतः। मत्वर्थो लुप्यते। मरुतां देवानां सम्बन्धिनो वा। **वेधसः** मेधाविनः **अस्य** यजमानस्य **तं** प्रसिद्धं **क्रतुं** यागं यज्ञात्मकं विष्णुं, 'यज्ञो वै विष्णुः' (श०

आ० १३।१।८।८ ) इति श्रुतेः। राजा राजमानः वरुणः सचन्त सेवते तम् एव क्रतुं यागम् अश्विना अश्विनौ सचेते। अन्येपि देवाः सचन्ते सेवन्ते। किंच विष्णुः सवनत्रयात्मना व्याप्तो विष्णुः सखिवान् यजमानादिसखिभिर्युक्तः सन् उत्तमम् उत्कृष्टतमम् अहर्विदम् अहर्वेत्तारम् स्वर्गोत्पादकमित्यर्थः। दक्षं बलं फलप्रदानसामर्थ्यरूपं दाधार धृतवान्। किंच व्रजं च मेघं च। व्रज इति मेघनाम 'व्रजः। चरुः' ( निघं० १।१० ) इति तन्नामसु पाठात्। तं वृष्ट्युदकाय अपोर्णुते अपगतावरणं करोति। आहुतिद्वारा यज्ञस्यैव वृष्ट्युत्पादकत्वात्। यद्वा मारुतस्य मरुत्संघातस्य देवगणस्य वेधसो विधातुः स्रष्टुर्विष्णोः क्रतुं कर्म पालनादिरूपं वरुणादयः सचन्ते तदधीनत्वात् पालनस्य। स च सखिवान् इन्द्रमरुदादिसहायोपेतः सन् उक्तलक्षणं दक्षं वृष्ट्युत्पादनादिसामार्थ्यरूपं बलं दाधार। तथा व्रजं चापोर्णुते॥ ४॥

५

आ यो विवाय सचथाय दैव्य इन्द्राय विष्णुः सुकृते सुकृत्तरः।
वेधा अजिन्वत्त्रिषधस्थ आर्यमृतस्य भागे यजमानमाभजत्॥

* ज्योत्स्ना * [ अन्वयः ] यः विष्णुः दैव्यः सुकृत्तरः सचथाय इन्द्राय सुकृते आ विवाय। ( सः ) वेधाः त्रिषधस्थः आर्यम् अजिन्वत्। ऋतस्य भागे यजमानम् आभजत्।

[ हिन्दी ] *विष्णुदेव का आगमन और यज्ञ की सफलता*-जो विष्णुदेव द्युलोकवासी और यज्ञफलदाताओं में श्रेष्ठ, यज्ञ के सहयोग के लिए अच्छी स्तुति करनेवाले यजमान के यहाँ आते हैं। वे मनोवाञ्छितफलदाता तीन सवन या तीन लोक के निवासी देवता विष्णु, इस यजमान को फल देकर प्रसन्न करते हैं और एतदर्थ यज्ञ के फल में यजमान को अधिकारी बना देते हैं अर्थात् यजमान का यज्ञ सफल कर देते हैं।

*सा० भा०* यः विष्णुः दैव्यः दिविः भवः सुकृत्तरः शोभनफल-प्रदानां मध्ये श्रेष्ठः आ विवाय आगच्छति। वेतेर्लिटि रूपम्। किमर्थम् सचथाय सचनाय यागसहायकरणाय कस्मै इन्द्राय इरां हविर्लक्षणान्नं द्रावयतीतीन्द्रो यजमानः। 'इन्द्र इरां दृणातीति इदंकरणादित्याग्रायणः' (निरु० १०।८) इति यास्केनोक्तनिर्वचनस्यात्रापि सद्भावात्। तस्मै उक्तरूपाय यजमानाय सुकृते शोभनस्तुतिकर्त्रे। आगत्य च वेधाः अभिमतफलविधाता त्रिषधस्थः त्रिसंख्योपेतसहस्थानवान् सवनत्रयस्थानः क्षित्यादिस्थानत्रयो वा विष्णुः। आर्यम् आगन्तव्यम् यजमानम् अजिन्वत् प्रीणयति। जिवि प्रीणनार्थः, इदित्वात् नुम्। तदर्थम् ऋतस्य यज्ञस्य भागे हुतशेषरूपे तं यजमानं आ भजत् भजति समर्पयतीत्यर्थः। यद्वा ऋतस्य यज्ञस्य भागे यजमानम् आभजत् स्वामित्वेन स्थापयति ॥५॥

## सूक्तसार

*ज्योत्स्ना* इस दीर्घतमा ऋषि के विष्णुसूक्त में विष्णुदेव की महिमावर्णन के साथ ही उन बातों का भी सङ्केत किया है जिनके द्वारा मनुष्य उन्नत हो सकता है। उनमें प्रधान रूप से—१ दूसरे को सुख देनेवाली मित्रता, २ अधिक अन्न होना, ३ दूसरे की रक्षा करना, ४ उदारहृदयता, ५ आश्चर्यकारी सत्कर्तव्य करना, ६ उत्साह, ७ दूसरे के उपकार करने का सामर्थ्य, ८ आपत्ति से छुड़ाना, और ९ बुलाने पर अवश्य जाना, विशेष उल्लेखनीय हैं। विष्णुदेव की स्तुति और यज्ञ में हविर्दान, उनके गुणों के कारण माना गया है। इनकी स्तुति अनन्त है। इनकी जन्म लीलाओं को कहनेवाला, स्तुति करने वाला तथा यज्ञादि अनुष्ठान के द्वारा उपासना करने वाला भक्त यजमान उस वैष्णव पद को प्राप्त करता है जिसे सभी लोग चाहते हैं। वेदमन्त्रों के द्वारा यह भी स्पष्ट है कि स्तुति

करने में अभिलाषाओं को आश्रय नहीं देना चाहिए। स्वाभाविक ढंग की (कामना रहित) स्तुति से देवता प्रसन्न रहते हैं। तृतीय मन्त्र में देवताओं के नाम कीर्तन करने का निर्देश किया गया है। इसी भाँति चतुर्थ मन्त्र में पुराण प्रसिद्ध मरुत् देवताओं की अद्भुत उत्पत्ति कथा का भी सङ्केत दिया है। इस सूक्त से यह भी स्पष्ट प्रतीत होता है कि विष्णुदेवता परमपुरुष, लक्ष्मी-पति, भक्तवत्सल, अद्भुतचरित्र, महान्, द्युलोकवासी तथा यज्ञ को सफल बनाने वाले देवता हैं। इनकी कृपा दृष्टि से हमारा कल्याण है।

*सूक्तरत्नमिदं विष्णोर्वेद-रत्नाकरोद्धृतम् ।*
*मिश्र-गोपालचन्द्रस्य ज्योत्स्नया राजतां हृदि ॥*

॥ इति प्रथमं वैष्णवं सूक्तं दैर्घतमसं समाप्तम् ॥



ज्योत्स्नाविवृति-सायणभाष्याभ्यां

यथोपलब्धभट्टभास्करभाष्येण च सहितम्

# विष्णुसूक्तम् २

[ ऋग्वेदीयं ७ मण्डलान्तर्गतं १०० तमं सूक्तम् ]



वैदिकसार्वभौम—महायाज्ञिक-पं० श्रीभगवत्प्रसादमिश्रवेदाचार्य-

( प्रोफेसर गवर्नमेन्ट संस्कृत कालेज बनारस )

महोदयानां निर्देशेन सम्पादितम् ।

# विष्णुसूक्तम् [ वासिष्ठम् ]

## [ ऋग्वेदे ७ मं० १०० सू० ]

❀ ज्योत्स्ना ❀

*विष्णोः परं सूक्तरत्नं गुर्वर्क-ज्ञानभा-वतः ।*
*मिश्र-गोपालचन्द्रस्य ज्योत्स्नया सविभूष्यते ॥*

### सूक्तपरिचयः

पाठ्यत्वेन निर्णीतं द्वितीयं विष्णुसूक्तमृग्वेदसंहितायां [ ७।१०० ] सप्तममण्डलान्तर्गतं शततमं सूक्तम् । अष्टकनिर्देशक्रमेण [ ५।६।२५ ] पञ्चमाष्टके षष्ठाध्याये पञ्चविंशतितमो वर्गः । अनुवाकनिर्देशक्रमेण [ ७।६।११ ] सप्तममण्डले षष्ठे ( आदितः षट्पञ्चाशत्तमे ) अनुवाके एकादशं सूक्तम् । अत्र सप्त ऋचः ।

### ऋषिपरिचयः

द्वितीयस्यास्य विष्णुसूक्तस्य वसिष्ठ ऋषिः । मण्डलेषु समस्तं सप्तमं मण्डलं वसिष्ठदृष्टमेव । अन्यत्रापि वसिष्ठदृष्टा मन्त्राः समुपलभ्यन्ते बहवः । तेषां सङ्कलनया षष्ट्यधिकमष्टशतं [ ८६० ] मन्त्रा भवन्ति ।

इतिवृत्तम्—प्रजापतेर्मरीचिः, मरीचेः कश्यपः पुत्रः समभवत् । कश्यपस्य दक्षपुत्र्यस्त्रयोदश भार्या अदित्यादय आसन् । अदित्यां कश्यपाद् द्वादश पुत्रा अजायन्त । तत्र मित्रो वरुण

इति द्वावन्यतमौ। एतयोर्हि मित्रावरुणयोरुर्वश्यामप्सरसि वसिष्ठो नाम महर्षिरुत्पन्नः। श्रेष्ठतमत्वादस्य वसतेर्धातोः श्रेष्ठार्थकादनुगुणं नामेति शौनकः। सोऽयं वसिष्ठ ऋषिस्तपस्तप्यमानोऽपश्यदिन्द्रमस्तौच्च स्वदृष्टाभिर्ऋग्भिः। एवं तत्र तत्रावसरेऽग्न्यादीनपि देवानस्तावीद् बह्वीभिर्ऋग्भिः। एकदा सोऽयमृषिस्त्रिरात्रं यावन्न किमपि भोजनं लेभ इति बुभुक्षितश्चतुर्थे दिवसे रात्रौ स्वपितुर्वरुणस्य गेहे चौर्यं कर्तुं प्रविष्टः। तत्रैनं क्रन्दमानो धावञ्छ्वा दष्टुमुदयुङ्क्त। तदा च वसिष्ठस्त्रिभिर्मन्त्रैः श्वानं सान्त्वयित्वा, गेहपालं वारुणं जनं चान्यैर्मन्त्रैः स्वापयामास। तथापि स वसिष्ठश्चौर्यप्रभावाद् वारुणैः पाशैरबध्यत। बद्धश्चायं वरुणं स्वपितरं संस्तुवन्पाशेभ्यो मुमुचे। वसिष्ठस्य विश्वामित्रस्य चासीत्परस्परं महान् विरोधः। एकदा वसिष्ठस्य पुत्रः शक्तिर्नाम पुष्पचयनार्थं वनं गतो विश्वामित्रप्रेरितैः सुदासस्य राज्ञो दासैर्दावाग्नौ प्रक्षिप्त इन्द्रं स्तुवन्नेवाग्निना समदह्यत। स्तुतिश्चास्य तदार्धर्चात्मिकैव समभवत्। अथ स्वतनयं शक्तिं चिरायमाणमवलोक्य सुतस्नेहवशानुगो मार्गे इतस्ततोऽवलोकयन् वनमभ्यागतो सुतं दग्धमनुशुश्राव वसिष्ठः। शोकाकुलोऽप्ययं महर्षिर्दग्धावशेषं शक्तिशरीरमुपादाय सार्धमन्त्रेणेन्द्रं तुष्टाव। तुष्टश्चेन्द्रः शक्तिं मृत्योरतिपारयामास। तदेवं विशिष्टाभिश्चमत्कृतिकरीभिर्वासिष्ठीभिः कृतिभिः क्षुभ्यन्निमं विश्वामित्रादिः कश्चन विरोधी 'यातुधानः, राक्षसः' इत्येवमादिभिरधिचिक्षेप। अधिक्षेपेण क्षुब्धो मैत्रावरुणिरनेकाभिर्ऋग्भिः प्रत्यभिशशापेत्यादि तत्र तत्र (ऋ० ७।१०४।१५-१६) सुस्पष्टमवगम्यते। पौराणिकास्तु वसिष्ठो ब्रह्मणो मानसः पुत्र इत्याचक्षते। तन्मनसा गृहीत इत्यर्थे न मैत्रावरुणित्वेन विसंवदति। विज्ञानविदस्तु मैत्रावरुणित्वमपि प्रत्याख्यान्ति। वसि-

छद्दृष्टास्तु तादृग्वृत्तु युष्मच्छब्दव्यवहारात्, अस्मदोऽनुपलब्धेश्च। तन्मते प्राणरूपस्य वसिष्ठस्यैव मैत्रावरुणित्वमुर्वशीजन्यत्वं चेति दिक्।

छन्दःपरिचयः

द्वितीयस्य वैष्णवसूक्तस्यास्य त्रिष्टुप्छन्दः। तस्य नानाविधत्वेऽपि सामान्यलक्षणमाह शौनकः—

'चतुश्चत्वारिंशत् त्रिष्टुबक्षराणि चतुष्पदा।
एकादशाक्षरैः पादैः' ( ऋ० प्रा० १६।६४ ) इति।

एकादशाक्षरैश्चतुर्भिः पादैस्त्रिष्टुप्छन्दो भवतीत्यर्थः। तत्रेदं लक्षणं प्रथम-तृतीय-सप्तममन्त्रवर्जं सर्वास्वृक्षु समन्वेति। छन्दः सम्पूर्तये द्वितीये मन्त्रे 'विश्वजन्या' मित्यत्र 'विश्वजनिया' मित्यूहः। पंचमे 'नामार्यः' इत्यत्र सन्धिच्छेदः। षष्ठे 'परिचक्ष्य' मित्यत्र 'परिचक्षियमि'ति व्यूहः। प्रथम-तृतीय-सप्तमेषु विराट्स्थाना नाम त्रिष्टुप्छन्दः। तथा च तल्लक्षणम्—

नवको दशको वा स्यादेकोऽनेकोऽपि त्रिष्टुभः।
एकादशाक्षरश्चापि विराट्स्थाना ह नाम सा॥

( ऋ० प्रा० १६।६७ ) इति।

यत्र नवाक्षरो दशाक्षरो वा एकः पादो भवति, अनेके वा पादा स्युः; एकः अनेको वा एकादशाक्षरस्त्रिष्टुभः पादः स्यात्तत्र विराट्स्थाना नाम त्रिष्टुप् प्रत्येतव्येति तदर्थः। तदत्र प्रथमे मन्त्रे प्रथमद्वितीयपादयोर्दशाक्षरत्वम्, तृतीयस्य एकादशाक्षरत्वम्, चतुर्थस्य 'नार्यमि' त्यत्र 'नारियमि' ति व्यूहेनैकादशाक्षरत्वम्, अव्यूहे तु दशाक्षरत्वम्। तृतीयमन्त्रे प्रथमो दशाक्षरः, चतुर्थो 'ह्यस्ये' त्यत्र 'हि अस्य' इति सन्धिविच्छेदव्यूहेनैकादशाक्षरः पादः। सप्तमे चतुर्थः पादो दशाक्षर इति।

देवतापरिचयः

सूक्तस्यास्य विष्णुरेव देवता। तस्य च परिचयः पूर्वसूक्ते (५ पृष्ठे) लिखित एवेति तत एवानुसन्धेयः।

विनियोगपरिचयः

*सूक्तविनियोगः*—अस्यापि सूक्तस्य उक्थ्यसंस्थे ज्योतिष्टोमे तृतीयसवनस्य तृतीये अच्छावाकशस्त्रे विनियोगः। तस्य च विवरणं पूर्वस्मिन् विष्णुसूक्ते (५पृ०) कृतमेवेति तत एवावगन्तव्यम्।

*मन्त्रविनियोगः।* द्वितीयमन्त्रविनियोगः—विष्णुदेवतोद्देशेन क्रियमाणे पशुयागे 'यद्दैवत्यः पशुस्तद्दैवत्यः पशुपुरोडाशो भवति' इति नियमात् पुरोडाशोऽपि विधीयते। तत्र पुरोडाशरूपहविषो हवनात् प्राक् 'त्वं विष्णो' इति मन्त्रः पुरोनुवाक्या[1]रूपेण पठनीयः। तथा च सूत्रम्—"त्वं विष्णो सुमतिं विश्वजन्यां, विचक्रमे पृथिवीमेष एताम्" (आश्व० श्रौ०३।८) इति। "विचक्रमे पृथिवीमेष एतामि" ति एतस्यैव सूक्तस्य चतुर्थो मन्त्रः, उक्ते एव वैष्णवपुरोडाशयागे याज्या[2]त्वेनोपदिश्यते 'तेषां याज्यानुवाक्याः। सर्वेषामग्रेऽनुवाक्यास्ततो याज्याः' (आश्व०श्रौ०३।७) इति परिभाषणादिति।

तृतीयमन्त्रविनियोगः। १-स्तो हि दर्शपूर्णमासाख्यौ यज्ञौ। तत्र यथायथं दर्शे पौर्णमास्यां च काले क्रियमाणत्वाद्यागावपि दर्शपूर्णमास इति नाम्ना व्यवह्रियेते। तत्र उभयत्र यज्ञे द्वे हविषी निश्चिते एव। विष्णुदैवत्यः आज्यद्रव्यकः उपांशुयाजस्तु आश्वलायनीयानां कृते विकल्पेनोपदिष्टः। तस्य करणपक्षे द्वयोः

---

१ पुरोनुवाक्या नाम देवताह्वानार्थं यागात्पूर्वं प्रयोक्तव्या ऋक्।

२ याज्या नाम देवतायै हविः प्रदानार्थं प्रयोक्तव्या ऋक्।

प्रधानहविषोर्मध्ये स भवति । तत्र तृतीयो मन्त्रस्तस्यैव वैष्णवस्योपांशुयाजस्य याज्यात्वेन विनियुज्यते । २-एवं विष्णुदैवत्ये पशौ क्रियमाणे पशोर्वपाया यागेऽपि एतस्य 'त्रिर्दिव' इति मन्त्रस्य याज्यात्वेन विनियोगः ।

चतुर्थमन्त्रविनियोगः—विष्णुदेवतोद्देशेन विधीयमाने पशौ तदीयवपाया यागे अनुवाक्यारूपेण 'वि चक्रमे' इत्येष मन्त्रो विनियुक्तः ।

पंचम-सप्तममन्त्रविनियोगः—यस्यां रात्रौ चन्द्रमा नाभ्युदेति तस्या उत्तरे दिवसे ( प्रतिपदः पूर्वाह्णे ) दर्शयागः कर्तव्यो भवति । तत्र दधिपयसी अपि उपयुज्येते, ते सान्नाय्यपदेनापि व्यपदिश्येते । तत्र दध्नो झटित्युत्पादयितुमशक्यत्वात् पूर्वरात्रौ ( अर्थात् अमावास्यायां रात्रौ ) दुग्धे आतञ्चनं ( 'जोरन' इति हिन्दी ) दत्वा दधि निष्पाद्यते । यागीयदधिनिष्पादने दुग्धदोहनातञ्चनादिषु वैदिकमन्त्राः प्रयुज्यन्ते । दर्शयागार्थं दध्नो निष्पत्तये क्रियमाणे वैधे प्रयोगेऽपि 'निर्वाप' इति शब्दोऽभ्युपेयते । सोऽयं निर्वापः यस्यां रात्रौ चन्द्रमा नाभ्युदियात्तस्यामेव रात्रौ कर्तव्यः । अथ कदाचित् प्रमादात् चतुर्दशीदर्शयोरन्यतरस्य क्षयेन, भ्रमवशाद्वा, चतुर्दश्यां निर्वापे कृते यदि उत्तररात्रे प्रत्यूषे चन्द्रमा उदितो दृश्यते तदा स्वकृतभ्रमप्रायश्चित्तरूपा, नोदेष्यतीति विश्वासेन प्रारब्धकार्यस्य मध्ये चन्द्रमा अभ्युदित इति निमित्तमाश्रित्य नैमित्तिकी 'अभ्युदयेष्टि' नाम इष्टिर्भवति । विनियुज्यते च तत्र पूर्वनिष्पादितं दधि । अभ्युदयेष्ट्यां तिस्रः प्रधानदेवताः अग्निर्दाता, इन्द्रः प्रदाता, विष्णुः शिपिविष्ट इति । तत्र विष्णवे शिपिविष्टाय हूयमाने हविषि पुरोनुवाक्यारूपेण एतस्यैव सूक्तस्य सप्तमः

'वषट् ते विष्णवास आकृणोमि' इति मन्त्रः, याज्यारूपेण चायं पञ्चमो मन्त्रः 'प्रतत्ते अद्य' इति प्रयोक्तव्य इति ।

पञ्चम-षष्ठ-सप्तममन्त्रविनियोगः—ज्योतिष्टोमस्य, अग्निष्टोमाऽत्यग्निष्टोमो-क्थ्य-षोडश्य-तिरात्र-वाजपेया-प्तोर्यामाख्याः सप्त संस्था इति पूर्वसूक्ते (५पृ०) उक्तम् । तत्र अतिरात्रसंस्थावति ज्योतिष्टोमयज्ञे क्रियमाणे तृतीयसवने सोमातिरेके जाते सति नैमित्तिकं शस्त्रं शंसनीयमित्येष विधिः । सवनार्थं निश्चितस्य सोमरसस्य सवनक्रियाकलापे समाप्तिं गतेऽपि (सोमरसस्य) सशेषस्थितिः सोमातिरेकः । सवनार्थं गृहीतसोमस्य तत्र निःशेषविनियोगः कार्यो न तस्य स्वल्पमपि परिशेषणमभ्यर्हितम् । यदि च कथंचित्तच्छिष्यते तर्हि तद् दोषाय कल्पत इति निमित्तसमुपस्थितौ प्रायश्चित्तरूपेण होत्रा शस्त्रं शंसनीयं भवति । तत्र शस्त्रे 'प्रतत्ते' इति मन्त्रत्रयं प्रयोक्तव्यम् । तदेतन्मन्त्रत्रिकं 'स्तोत्रियस्तृच' इति कथ्यते । स्तोत्रियस्तृचः स उच्यते यस्मिंस्तृचे सामगैः स्तोत्रं क्रियते । स्तोत्रं नाम प्रगीतमन्त्रसाध्या देवतास्तुतिरिति ।

१

नू मर्तो दयते सनिष्यन्यो विष्णव उरुगायाय दाशत् ।
प्र यः सत्राचा मनसा यजात एतावन्तं नर्यमाविवासात् ॥

❀ ज्योत्स्ना ❀ [ अन्वयः ] ( स ) मर्तः सनिष्यन् नु दयते । यः उरुगायाय विष्णवे दाशत् । यः सत्राचा मनसा प्र यजाते । ( यः ) एतावन्तं नर्यं आविवासात् ।

[ हिन्दी ] *धन प्राप्ति के उपाय*—वह मनुष्य धन की इच्छा करता हुआ जल्दी ही धन प्राप्त कर लेता है जो बहुतों से स्तुत्य विष्णुदेव के लिए हवि आदि देता है । या जो अनुरूप

(योग्य) मननीय हार्दिक स्तुति से पूजा करता है। या जो इतने (विश्वव्यापी) जन-हितकारी रूप की नमस्कार आदि के द्वारा सेवा करता है ॥ १ ॥

* सा० भा० * 'नू मर्तः' इति सप्तर्चमेकादशं सूक्तं वसिष्ठस्यार्षं त्रैष्टुभं वैष्णवम्। 'नू मर्त्तः' इत्यनुक्रान्तम्। उक्थ्ये अच्छावाकशस्त्र इदं शंसनीयम्। सूत्रितं च 'ऋतुर्जनित्री नू मर्तो भवा मित्रः' (आश्व० श्रौ० ६।१) इति।

सः मर्तः मनुष्यः सनिष्यन् धनमिच्छन् नु क्षिप्रं दयते धनमादत्ते। दयतिराङ्पूर्वार्थे (ददातौ) द्रष्टव्यः। यः मनुष्यः उरुगायाय बहुभिः कीर्तनीयाय विष्णवे दाशत् हवींषि दद्यात्। यः च सत्राचा सहाञ्चता मनसा मननेन स्तोत्रेण प्र यजाते प्रकर्षेण पूजयेत्। एतावन्तम् एतावत्परिमाणं महान्तं नर्यं नरेभ्यो हितं विष्णुम् आविवासात् नमस्कारादिभिः परिचरेत्। स मर्तो दयत इत्यन्वयः। यद्वा सनिष्यन्निति सनतेर्लाभार्थस्य लृटि रूपम्। सः मर्तः सनिष्यन् धनादीनि लप्स्यमानो भवन्नेव हविरादिकं नु क्षिप्रं दयते विष्णवे ददातीति योज्यम् ॥ १ ॥

२

त्वं विष्णो सुमतिं विश्वजन्यामप्रयुतामेवयावो मतिं दाः।
पर्चो यथा नः सुवितस्य भूरेरश्वावतः पुरुश्चन्द्रस्य रायः ॥

* ज्योत्स्ना * [ अन्वयः ] हे एवयावः! विष्णो! त्वं विश्वजन्यां अप्रयुतां सुमतिं मतिं दाः। सुवितस्य भूरेः अश्वावतः पुरुश्चन्द्रस्य रायः पर्चः नः यथा (स्यात्)।

[ हिन्दी ] *सद्बुद्धि की प्रार्थना तथा उसका उपयोग*—हे अभिमत फलदाता विष्णुदेव! आप विश्वजन हितकारिणी, दोषों से विनिर्मुक्त, अनुग्रहरूप, सद्बुद्धि हमको दीजिए। हमारा सुलभ, अधिक, घोड़े (आदि पशुओं) से समृद्ध, बहुतों

को प्रसन्न करनेवाले धन से संबन्ध जैसे होवे वैसी बुद्धि दीजिए ॥२॥

* सा० भा० * विष्णुदैवत्ये पशौ पुरोडाशस्य 'त्वं विष्णो' इत्यनुवाक्या। सूत्रितं च 'त्वं विष्णो सुमतिं विश्वजन्यां, वि चक्रमे पृथिवीमेष एताम्' ( आश्व० श्रौ० ३। ८ ) इति।

हे एवयावः! एवाः प्राप्तव्याः कामाः, तान् यापयति प्रापयति स्तोतृनित्येवयावा, हे एवयावन्। विष्णो! त्वं विश्वजन्यां सर्वजनहिताम् अप्रयुतां दोषैर्वियुक्तां सुमतिं (मतिं) अनुग्रहबुद्धिं दाः अस्मभ्यं देहि। सुवितस्य सुष्ठु प्राप्तव्यस्य भूरेः बहुलस्य अश्वावतः अश्वयुक्तस्य पुरुश्चन्द्रस्य पुरूणां बहूनामाह्लादकस्य रायः धनस्य पर्चः संपर्कः नः अस्माकं यथा भवति तथा देहीत्यन्वयः ॥ २ ॥

३

त्रिर्देवः पृथिवीमेष एतां वि चक्रमे शतर्चसं महित्वा।
प्र विष्णुरस्तु तवसस्तवीयान्त्वेषं ह्यस्य स्थविरस्य नाम ॥

* ज्योत्स्ना * [ अन्वयः ] एषः देवः शतर्चसं एतां पृथिवीं महित्वा त्रिः वि चक्रमे। तवसः तवीयान् विष्णुः प्र अस्तु। हि अस्य स्थविरस्य नाम त्वेषं ( अस्ति )।

[ हिन्दी ] *पराक्रम तथा हमारा आसरा*—इस श्रीविष्णुदेवने अनेक ज्योतिर्मय शक्तियों से संपन्न इस लोकत्रयात्मिका पृथिवी को अपने महत्व से तीन पैर में कर लिया[1]। यह वुड्ढों से भी वुड्ढा अर्थात् सनातनपुरुष श्रीविष्णु हमारा स्वामी होवे, क्योंकि इस पुराणपुरुष का नाम चमक रहा है, अर्थात् बहुत विख्यात है ॥३॥

---

१—वामनावतार कथा, भा० म० पु० ८।१६-२३अ०।

* सा० भा * ( १ ) वैष्णवस्योपांशुयाजस्य 'त्रिर्देवः' इति याज्या। सूत्रितं च 'इदं विष्णुर्वि चक्रमे, त्रिर्देवः पृथिवीमेष एताम्' ( आश्व० श्रौ० १।६) इति ।(२) वैष्णवे पशावप्येषैव वपाया याज्या। सूत्रितं च 'त्रिर्देवः पृथिवीमेष एतां, परो मात्रया तन्वा वृधान' ( आश्व० श्रौ० ३।८ ) इति।

एषः देवः दानादिगुणयुक्तो विष्णुः शतर्चसं शतसंख्यान्यर्चींषि यस्यास्तादृशीम् एतां पृथिवीम्, उपलक्षणमेतत् पृथिव्यादींस्त्रील्लोकान् महित्वा महत्त्वेन त्रिः वि चक्रमे त्रिभिः पदैर्विक्रान्तवान्। तवसः तवस्विनो वृद्धादपि तवीयान् तवस्वितरः विष्णुः प्र अस्तु अस्माकं प्रभवतु स्वामी भवतु। अस्य स्थविरस्य वृद्धस्य विष्णोः नाम्न नामकं रूपं विष्णुरित्येतन्नामैव वा त्वेषं हि यस्माद् दीप्तं तस्मात् कारणात् स विष्णुः प्रभवत्वित्यर्थः॥ ३॥

४

वि चक्रमे पृथिवीमेष एतां क्षेत्राय विष्णुर्मनुषे दशस्यन्।
ध्रुवासो अस्य कीरयो जनास उरुक्षितिं सुजनिमा चकार॥

* ज्योत्स्ना * [ अन्वयः ] एषः विष्णुः एतां पृथिवीं क्षेत्राय मनुषे दशस्यन् वि चक्रमे। अस्य कीरयः जनासः ध्रुवासः ( भवन्ति )। सुजनिमा ( च ) उरुक्षितिं ( स्तोतृभ्यः ) चकार।

[ हिन्दी ] *भक्तों के लिए निर्भयता*—ये विष्णुदेव इस पृथिवी को बसाने के लिए मनुष्यों ( स्तुतिकर्ता देवताओं ) को देने की इच्छा से पराक्रम करते हैं। अर्थात् इस पृथ्वी को तीन पैर से नाप देते हैं। इस विष्णुदेव के स्तोता गण निश्चिन्त रहते हैं[1], क्योंकि कीर्तन स्मरणादि से कल्याणकारिणी पवित्र जन्म-अवतार लीलाओं का क्रीडाकारी विष्णुदेव भक्त स्तोताओं के लिए विशाल क्षेत्र ( निवास भूमि ) बना देता है॥४॥

---

१—द्र० 'अनन्या श्चिन्तयन्तो मां० गीता ( ९।२२ )

* सा० भा० * पूर्वोक्त एव पशौ 'वि चक्रमे' इति वपाया अनुवाक्या। सूत्रितं च 'वि चक्रमे पृथिवीमेष एतां, त्रिर्देवः पृथिवीमेष एताम्' ( आश्व० श्रौ० ३।८ ) इति।

एष देवः विष्णुः एतां पृथिवीं पृथिव्यादीनिमाँस्त्रींल्लोकान् क्षेत्राय निवासार्थं मनुषे स्तुवते देवगणाय दशस्यन् असुरेभ्योऽपहृत्य प्रदास्यन् वि चक्रमे विक्रान्तवान्। अस्य च विष्णोः कीरयः स्तोतारः जनासः जनाः ध्रुवासः निश्चला भवन्ति, ऐहिकामुष्मिकयोर्लाभेन स्थिरा भवन्तीत्यर्थः। सुजनिमा शोभनानि जनिमानि कीर्तनस्मरणादिना सुखहेतुभूतानि यस्य तादृशो विष्णुः उरुक्षितिं विस्तीर्णनिवासं चकार स्तोतृभ्यः करोति ॥ ४ ॥

५

प्र तत्ते अद्य शिपिविष्ट नामार्यः शंसामि वयुनानि विद्वान्।
तं त्वा गृणामि तवसमतव्यान्क्षयन्तमस्य रजसः पराके॥

* ज्योत्स्ना * [ अन्वयः ] हे शिपिविष्ट! ते तत् नाम अर्यः वयुनानि विद्वान् अद्य प्र शंसामि। तवसं तं त्वा अस्य रजसः पराके क्षयन्तं अतव्यान् गृणामि।

[ हिन्दी ] *हमारी बालस्तुति*—अपनी किरणों से व्याप्त करने वाले हे विष्णो! आपके प्रसिद्ध 'विष्णु' नामकी मैं यजमानरूप से यज्ञ स्वामी, और जानने की बात को जानने वाला होकर आज बहुत स्तुति करता हूँ। पुराणपुरुष और इस लोक से दूर रहनेवाले आपकी मैं अवृद्ध=बालक व्यक्ति स्तुति करता हूँ॥ ५ ॥

*सा० भा०* (१) तृतीयसवनेऽतिरात्रादूर्ध्वं सोमातिरेके सति नैमित्तिके होतुः शस्त्रे 'प्र तत्ते अद्य' इति स्तोत्रियस्तृचः (आश्व० श्रौ० ६।७)। (२)

अभ्युदयेष्टौ विष्णोः शिपिविष्टस्य 'प्र तत्ते अद्य' इति याज्या। सूत्रितं च 'वषट् ते विष्णवास आ कृणोमि, प्र तत्ते अद्य शिपिविष्ट' ( आश्व० श्रौ० ३।१३ ) इति ॥

हे शिपिविष्ट ! रश्मिभिराविष्ट विष्णो ते तव तत् प्रसिद्धं विष्णुरिति प्रख्यातं नाम अर्यः स्वामी स्तुतीनाम् हविषां वा तथा वयुनानि ज्ञातव्यान्यर्थजातानि विद्वान् जानन्नहं अद्य इदानीं प्र शंसामि प्रकर्षेण स्तौमि। तवसं प्रवृद्धं तं त्वा त्वां विष्णुम् अतव्यान् अतवीयानवृद्धतरोऽहं गृणामि स्तौमि। कीदृशम् अस्य रजसः लोकस्य पराके दूरदेशे क्षयन्तं निवसन्तम् ॥ ५ ॥

---

## ❀ भट्टभास्करभाष्यम् ❀

प्र तत्त इति त्रिष्टुप्। हे शिपिविष्ट ते तव तन्नाम शिपिविष्टेत्येवंरूपं अद्यास्मिन् कर्मणि प्रशंसामि। प्रशस्तगुणाभिधाय्येवेदं नाम न तु निन्दितं मन्तव्यम्। अज्ञस्त्वमिति न वक्तव्यमित्याह अर्यः अरणीयोऽहम्। 'अर्यः स्वामिवैश्ययोः'(पा० ३।१।१०३) इति। कोऽभिप्रायः ? एषोऽभिप्रायः। केचिदाहुः शेप इव निर्वेष्टितः संयतरश्मिश्शिपिविष्ट इति। अन्ये तु ब्रुवते निर्विष्टशेपश्शिपिविष्ट इति। अपरे त्वाचक्षते निवृत्तरश्मिश्शिपिविष्ट इति। नैतेषु त्रिष्वपि पक्षेषु अनेन पदेन कश्चिद् गुणोऽभिधीयते। अपि तु निन्दैव। ततश्चानेन पदेन निर्वापादिक्रियमाणमुपालम्भमस्यावहेत्। अत इमं दोषमपनेतुमिदमुक्तमिति। तत्कथमिति चेदुच्यते नात्र शेपशब्दोऽस्ति। न च केवलोऽपि विशिर्निरुपसृष्टस्यार्थमभिधातुमीष्टे। तस्मात् शिपयो रश्मयः, श्यतेः शिपयः, तैक्ष्ण्यात्, तेषु प्रविष्टश्शिपिविष्ट इति प्रशंसापरमेतत्। अतोऽहमप्येतत्प्रशंसामीति। अतवीयान् तन्नामानं तवसं तपस्विनं महान्तम्। 'तु' इति वृद्धिकर्मा ( निघं० ४।१।५७; ) ( निरु० ४।२५ )। असुन्नन्तादुत्पन्नो मत्वर्थीयो लुप्यते। अत एव प्रत्ययान्तरसंक्रान्त्या

न्विषयत्वाभावादाद्युदात्तत्वाभावः। ईदृशमहं गृणामि स्तौमि। अतवीयान् अतिशयेन तपस्वी तवीयान् ततोऽन्योऽतवीयान्। यद्यप्यहं विद्यामहिम्ना तवीयान्, तथापि त्वदपेक्षया अतवीयान्। तादृशोऽपि त्वत्प्रसादेन त्वां स्तौमीति। विन्मतोर्लुक्, तपस्विशब्दादीयसुन्प्रत्ययः। अत एवातिशय्यमानोऽपि तपस्वीति गम्यते। द्वयोर्हि तपस्विनोरन्यतरस्तपीयान् भवति। इदानीमुक्तं शिपिविष्टपदार्थं समर्थयितुमाह अस्य रजसोऽन्तरिक्षस्य पराके परागते दूरे प्रदेशे क्षयन्तं निवसन्तं तथापि सर्वलोकप्रकाशकं त्वां स्तौमि इदं तव शिपिविष्टत्वम् अतः प्रशंसामीति। क्षि निवासगत्योः (तु० प०) व्यत्ययेन शप्॥ ५॥

६

**किमित्ते विष्णो परिचक्ष्यं भूत्प्र यद्ववक्षे शिपिविष्टो अस्मि।**
**मा वर्पो अस्मदप गूह एतद् यदन्यरूपः समिथे बभूथ॥**

* ज्योत्स्ना * [ अन्वयः ] हे विष्णो! ते किं परिचक्ष्यं भूत्? यत् प्र ववक्षे शिपिविष्टो अस्मि (इति)। एतत् वर्पः अस्मत् मा अप गूहः। यत् अन्यरूपः समिथे बभूथ।

[ हिन्दी ] *स्पष्टदर्शन की प्रार्थना*—हे विष्णो! आपके उस नाम की क्या प्रशंसा करें जिसे आप 'शिपिविष्ट' ( छिपा हुआ तेज ) शब्द से कहते हैं। इस विष्णुरूप को हमारे लिए छिपाइये नहीं, जो आप दूसरे रूपसे सङ्ग्राम में सहायता के लिए आए हैं। अर्थात् हम आपको पहचान गए हैं आप हमें अपना वास्तविक वैष्णव रूप का ही दर्शन दीजिए।

अथवा—हे विष्णो! आपकी क्या प्रशंसा करें जो आप अपने को 'शिपिविष्ट' (मूत्रेन्द्रिय की तरह छिपे हुए) कहते हैं। अर्थात् हम आपके गूढ रूप की स्थिति को अच्छी नहीं समझते। हम अज्ञ बालकों के लिए अपना वास्तविक रूप न छिपाइए। हम

**जानते हैं कि आप हमारे जीवन संग्राममें छिपे रूप से सहायतार्थ उपस्थित हैं ॥ ६ ॥**

❀ सा० भा० ❀ पुरा खलु विष्णुः स्वं रूपं परित्यज्य कृत्रिमं रूपान्तरं धारयन् संग्रामे वसिष्ठस्य साहाय्यं चकार। तं जानन्नृषिरनया प्रत्याचष्टे। अत्र निरुक्तं—'शिपिविष्टो विष्णुरिति विष्णोर्द्वे नामनी भवतः। कुत्सितार्थीयं पूर्वं भवतीत्यौपमन्यवः। किं ते विष्णो प्रख्यातमेतद्भवत्यप्रख्यापनीयं यन्नः प्रब्रूषे शेप इव निर्वेष्टितोऽस्मीत्यप्रतिपन्नरश्मिः। अपि वा प्रशंसानामैवाभिप्रेतं स्यात्। किं ते विष्णो प्रख्यातमेतद् भवति प्रख्यापनीयं यदुत प्रब्रूषे शिपिविष्टोऽस्मीति प्रतिपन्नरश्मिः। शिपयोऽत्र रश्मय उच्यन्ते तैराविष्टो भवति। मा वर्पो अस्मदपगूह एतत्। वर्प इति रूपनाम, वृणोतीति सतः। यदन्यरूपः समिथे संग्रामे भवसि संयतरश्मिः (निरु० ५।७-८) इति'।

तत्र कुत्सितार्थपक्षे योजना–हे **विष्णो ! ते** तव तन्नाम **किं परिचक्ष्यं** प्रख्यापनीयं **भूत्** भवति। किं शब्दः क्षेपे। अप्रख्यापनीयमेव तद् भवति। **यत्** नामास्मभ्यं **प्र ववक्षे** प्रब्रूषे **शिपिविष्टोऽस्मि** इति। अन्तर्णीतोपमानमेतत्। शेप इव निर्वेष्टितस्तेजसानाच्छादितो भवामीति। तदश्लीलार्थत्वादिदं नाम न प्रशस्तमित्यर्थः। तन्नाम किं परिचक्ष्यं वर्जनीयं परित्याज्यम्। विरुद्धार्थप्रतिपादकत्वात्, स्वत एव परित्यक्तं हि तत्। शिष्टं समानं पूर्वेण। अत उक्तरूपविलक्षणं यद् वैष्णवरूपमस्ति **एतत् वर्पः** रूपम् **अस्मत्** अस्माकं **मा अप गूहः** अपगूढं संवृतं मा कुरु। गुहू संवरणे। अपि तु तदेव रूपं प्रकटय। वैष्णवस्य रूपस्य गूहने का प्रसक्तिरिति चेत्। **यत्** यस्मात् **अन्यरूपः** रूपान्तरमेव धारयन् **समिथे** संग्रामे **बभूथ** अस्माकं सहायो भवसि तस्मादिदं गूहनं न कार्यमिति।

प्रशंसापक्षे तु—हे विष्णो ! **ते** तव तन्नाम **किं परिचक्ष्यं भूत्** किं प्रख्यापनीयं भवति। न प्रख्यापनीयम्। किं तन्नाम, **शिपिविष्टो** रश्मिभिराविष्टो**ऽस्मी**ति (**प्रववक्षे**) प्रब्रूषे। यत एवं प्रख्यातरूपस्त्व-

मतोऽस्माकमेतद् वैष्णवं वर्पः रूपं (मा अपगूहः)'संवृतं मा कर्षीः। इदानीं गूढ़रूपोऽपि यद्यस्मात्त्वं समिथे संग्रामेऽन्यरूपः कृत्रिमरूपं यदन्यद् वैष्णवं रूपं शौर्यादिलक्षणं तादृग्रूप एवं बभूथ भवसि तस्मात् त्वं गूढ़ोऽपि ज्ञायस एवेति व्यर्थमेव तस्य रूपस्य गूहनम्। अतो बहुतेजस्कं यद् वैष्णवं रूपं तदस्माकं प्रदर्शयेति तात्पर्यार्थः ॥ ६ ॥

---

## ❀ भट्टभास्करभाष्यम् ❀

किमित्त इति त्रिष्टुवेव। हे विष्णो ते तव किं परिचक्ष्यं गूहनीयं वर्जनीयमेव भूत् भवति, नैवैतद्वर्जनीयम्। चक्षेः छान्दसो यत् 'बहुलं संज्ञाछन्दसोः' इति ख्याञादेशाभावः। भवतेर्लेटि शपो लुक् 'भूसुवोस्तिङि' (पा० ७।३।८८) इति गुणाभावः, लङि वा छान्दसः शपो लुक्, लुङि वा 'गातिस्था' (पा० २।४।७७) इति सिचो लुक्। 'बहुलं छन्दस्यमाङ्योगेऽपि' (पा० ६।४।७५) इत्यडभावः। इदानीं तदेव परिसंख्येयतया संभाव्यमानं दर्शयति हे शिपिविष्ट शिपिविष्टोऽस्मीति यद् ववक्षे किमिदं तदेव परिचक्ष्यं भवति नैतदेवम्। तस्माच्छिपिविष्टोऽस्मीति ब्रुवन्नेव विश्वव्यापी वर्तस्वेति। वक्तेर्व्यत्ययेनात्मनेपदम् 'बहुलं छन्दसि' इति शपः श्लुः। इदानीं प्रशस्तगुणाभिधाय्येतन्नाम न परिसंख्येयं, अपि तु लोके ख्यापयितव्यमिति दर्शयितुमाह वर्पः वरितव्यमिदमुच्छ्रितं नाम मापगूहः नेदं अस्माकं गूहनीयं, अपि तु लोके श्लाघमानेन त्वया आघोषणीयमेव। वर्प गतौ असुन् प्रत्ययः। गूहतेश्छान्दसोऽङ् प्रत्ययः। अथ यदि ब्रूयाः नापगूहामिति मृषैतत् यस्मात्त्व समिथे संग्रामे उदयकाले रक्षोभिस्सह तव यस्संग्रामः तत्रान्यरूपो बभूथ भवसि, न मध्यान्ह इव महातेजा भवसि। तन्नूनं लज्जया शत्रुजनसमवाये उदयकाले एतदात्मीयं रूपं छादयसीति संलक्ष्यते। तस्मान्नैवमिदं गूहनीयमिति। 'बभूथाततन्थ' (पा० ७।२।६४) इतीडभावो निपात्यते। अन्य आहुः उक्तं शिपिविष्टोऽस्मीति नेदं परिसंख्येयमिति। अथापि यत् त्वं लज्जयेव

-समिथे सङ्ग्रामे उदयकाले अन्यरूपो भवसि इदमेव वर्पः प्रशस्ततरं रूपं, तस्मादेतं मापगूहः सर्वावस्थास्वपि इदमेव रूपं तव भवतु इदमेव शोभन-मिति। अत्र निरुक्तादिषु बहुधा व्याख्यानानि कृतानि, अत्र युक्तरूपमिद-मस्माभिरुक्तम् ॥६॥

## ७

वषट् ते विष्णवास आ कृणोमि तन्मे जुषस्व शिपिविष्ट हव्यम्।
वर्धन्तु त्वा सुष्टुतयो गिरो मे यूयं पात स्वस्तिभिः सदा नः॥

*ज्योत्स्ना* [अन्वयः] हे विष्णो! ते आसः आ वषट् कृणोमि। हे शिपिविष्ट! तत् मे हव्यं जुषस्व। सुष्टुतयः मे गिरः त्वा वर्धन्तु। यूयं स्वस्तिभिः सदा नः पात।

[ हिन्दी ] *अपनाने की प्रार्थना*—हे विष्णुदेव! मुखसे आपके लिए वषट्कार करता हूँ। हे शिपिविष्ट! उस वषट्कार द्वारा दी हुई मेरी हवि को ग्रहण कीजिए। हमारी अच्छी स्तुतिरूप वाणी आपको बढ़ावे ( प्रसन्न करे )। हे देवगण! आप सब कल्याण कार्य द्वारा सर्वदा हमारी रक्षा कीजिए ॥७॥

*सा० भा०* व्याख्यातेयम्। [हे विष्णो! ते तुभ्यम् आसः आस्यात् आ अभिमुखं वषट् कृणोमि करोमि। वषट्कारेण हविर्हात्रयामि। हे शिपिविष्ट! शिपयो रश्मयः तैराविष्ट विष्णो तत् वषट्कृतं मे मदीयं हव्यं हविः जुषस्व सेवस्य। सुष्टुतयः शोभनस्तुत्यात्मिका गिरः वाचश्च त्वां वर्धन्तु वर्धयन्तु।—( ऋ० ७।९९।७) ]

अक्षरार्थस्तु हे विष्णो! तुभ्यमास्यादास्येन वषट्करोमि। वषट्कृतं तन्मदीयं हविर्हे शिपिविष्ट सेवस्व। शोभनस्तुतिरूपा मदीया वाचश्च त्वां वर्धयन्त्विति। शिष्टः पादः सिद्धः। [ ( हे विष्णो! ) नः अस्मान् यूयं त्वत्परिवाराश्च सर्वे स्वस्तिभिः अविनाशिभिर्मङ्गलैः। तथा च यास्कः—

'स्वस्तीत्यविनाशनामास्तिरभिपूजितः स्वस्ति' ( निरु० ३. २१ ) इति। सदा पात रक्षत ।—ऋ० ७।१।२० ] ॥७॥

---

## ❀ भट्टभास्करभाष्यम् ❀

वषडिति त्रिष्टुप् । हे विष्णो व्यापनशील ते तव । आङ् मर्यादायाम्। वषट् कृणोमि करोमि ददामि। किम्? आसः अस्यते क्षिप्यत इत्यासः, अग्नौ क्षिप्यमाणं हविरुच्यते । कर्मणि घञ् , वचनव्यत्ययः, 'कर्षात्वतः' इत्यन्तोदात्तत्वम् । यद्वा असुनि सवर्णव्यत्ययः । हे शिपिविष्ट तन्मे हव्यं हविः जुषस्व सेवस्व । शिपयो रश्मयः तैर्वेष्टितः, प्रविष्टो वा। पृषोदरादित्वादभीष्टं रूपं सिद्धम् । किं च मम सुष्टुतयः शोभनस्तुतिकारणभूता गिरः त्वां वर्धन्तु वर्धयन्तु स्तुवन्त्विति यावत् । स्तुत्या हि स्तोतव्यो वर्धते । 'बहुलं संज्ञाछान्दसोः' इति णिलुक्, 'छन्दस्युभयथा' इति वा शप आर्धधातुकत्वम् । यूयं च मया स्तुताः नः अस्मान् स्वस्तिभिः अविनाशैः पात रक्षत सदा सर्वदा । पूजार्थमेकमस्मिन् बहुवचनम् ॥७॥

## सूक्तसार

❀ज्योत्स्ना❀ महर्षि वसिष्ठ के द्वारा देखे गए इस सात ऋचावाले विष्णुसूक्त में धन प्राप्ति के लिए विष्णुदेव की आराधना बताई गई है। यहाँ 'सनिष्यन्' शब्द तथा उसके मूलधातु 'षणसंभक्तौ' पर ध्यान देने से यह स्पष्ट ज्ञात होता है कि धन शब्द से मनुष्य की सभी अभिलषित वस्तुओं को समझना चाहिए। अपनी अभिलाषाओं की पूर्ति के लिए विष्णुदेव की आराधना के तीन प्रकार बताए गए हैं—१ यज्ञ करना, २ मनोयोग की (हार्दिक) स्तुति का अनुष्ठान और ३ परिचर्या। वैदिक कर्मकाण्ड, पुराण एवं साम्प्रदायिक ग्रन्थों में इन तीनों आराधना के प्रकारों का विस्तार पूर्वक विश्लेषण एवं विधान बताया गया है। मनोयोग की

हार्दिक स्तुति चाहे वह स्वकृत (अपनी रचना) हो या परकृत (दूसरे की रचना ) हो उसमें आवृत्ति करना (बार बार बोलना) आवश्यक है, यह 'प्रयजाते' शब्द के उपसर्ग द्वारा ज्ञात होता है। यही आवृत्ति 'पुरश्चरण' के नाम से शास्त्रकारों द्वारा नियमित कर दी गई है। इस सूक्त से यह भी ज्ञात होता है कि मनुष्य को अपनी अनन्त अभिलाषाओं या वाञ्छित पदार्थ —धन—के मानसिक चुनाव में उस अभिलाषा या धन को अपनाना चाहिए जिसके प्राप्त करने में अत्यन्त कष्ट न हो, और जो मात्रा में अधिक हो, पशु आदि समृद्धि से हितावह तथा बहुतों को प्रसन्नता प्रदान करनेवाला हो। इसी प्रकार अपनी बुद्धि को भी समस्त प्राणियों के कल्याण चाहने वाली, दोषरहित और अनुग्रहरूपिणी ( दूसरे का उपकार करनेवाली ) बनाना चाहिए। इस सूक्त में ऐसी बुद्धि और धन के लिए विष्णुदेव से प्रार्थना की गई है। तथा यह भी बताया गया है कि आराधना करनेवाला भक्त सांसारिक और पारलौकिक लाभोंसे युक्त होनेके कारण ध्रुव-निश्चल निश्चिन्त-सा रहता है। उसके स्थिति का पूर्ण उत्तरदायित्व विष्णुदेव पर आ जाता है। इस स्थितिके लिए 'अनन्यता' आवश्यक है यह श्रीमद्भगवद्गीता तथा इन मन्त्रों के मनन से परिज्ञात होता है। वामनावतार का पौराणिक इतिहास, तथा किसी समय युद्धमें वसिष्ठ ऋषिकी अज्ञातरूप से सहायता करने का इतिहास भी इस सूक्त में अन्तर्हित है। इस सूक्तके द्वारा यह ज्ञात होता है कि श्रीविष्णुदेव बहुतों के उपास्य, मनोरथ को पूर्ण करनेवाले, अत्यन्त पुरातन-स्थविर पुरुष हैं। इनका नाम बहुत प्रसिद्ध है। और इनकी अवतार जन्मलीलाएँ कीर्तन स्मरण के योग्य हैं। इनकी मूलनिवास

भूमि इस लोक से बहुत दूर है। विष्णुदेव जागरूक होकर भक्तजनों की सहायता अप्रकट रूप से किया करते हैं। परन्तु परमभक्त सज्जन जब इन्हें पहचान जाते हैं तो इनको उलहना देते हैं, और स्पष्ट स्वरूपदर्शन के लिए प्रार्थना करते हैं। इसी कारण इनका शिपिविष्ट नाम प्रसिद्ध हुआ है। इनकी श्रौतयज्ञ और स्तुति वचनों से अधिक प्रसन्नता होती है। श्रीविष्णुदेव तथा इनके परिवार देवताओं से भी अविनश्वर मंगल की कामना तथा रक्षा की प्रार्थना की गई है।

*सूक्तरत्नमिदं विष्णो-र्वैदरत्नाकरोद्धृतम् ।*
*मिश्र-गोपालचन्द्रस्य ज्योत्स्नया राजतां हृदि ॥*

॥ इति द्वितीयं वैष्णवं सूक्तं वासिष्ठं समाप्तम् ॥



ज्योत्स्नाविवृति-सायणभाष्य-स्कन्दस्वामिभाष्येति-
त्रितयसहितम्—

# वरुणसूक्तम्

[ ऋग्वेदीयं १ मण्डलान्तर्गतं २५ तमं सूक्तम् ]



वैदिकसार्वभौम—महायाज्ञिक-पं० श्रीभगवत्प्रसादमिश्रवेदाचार्य-
( प्रोफेसर गवर्नमेन्ट संस्कृत कालेज बनारस )
महोदयानां निर्देशेन सम्पादितम् ।

# वरुणसूक्तम्

[ ऋग्वेदे १ मं० २५ सू० ]

❀ ज्योत्स्ना ❀

*सूक्तरत्नं वारुणं श्रीगुर्वर्क-ज्ञानभा-वतः ।*
*मिश्र-गोपालचन्द्रस्य ज्योत्स्नया संविभूष्यते ॥*

## सूक्तपरिचयः

ऋग्वेदे सन्ति बहूनि वारुणानि सूक्तानि। तत्रेदमृग्वेद-संहितायां [ १।२५ ] प्रथममण्डलान्तर्गतं पंचविंशतितमं सूक्तम्। अष्टकनिर्देशक्रमेण तु [ १।२।१६–१९ ] प्रथमाष्टके द्वितीयाध्याये षोडश-सप्तदशा-ष्टादशो-नविंशतिरिति चत्वारो वर्गाः। तत्राद्या-स्त्रयो वर्गाः पञ्चर्चाः, तुरीयः षडर्चः। अनुवाकनिर्देशक्रमेण [ १।६।२ ] प्रथममण्डलस्य षष्ठेऽनुवाके द्वितीयं सूक्तम्। अस्मिन् सूक्ते एकविंशति ऋचः।

## ऋषिपरिचयः

एतस्य हि वारुणस्य सूक्तस्य शुनःशेप ऋषिः। ऋग्वेदे शुनः-शेपेन ऋषिणा दृष्टानि अष्टौ सूक्तानि समुपलभ्यन्ते। तत्र प्रथमे मण्डले चतुर्विंशतितमं सूक्तमारभ्य त्रिंशत्तमं सूक्तं यावदिति सप्त, नवमे तृतीयमित्यष्टौ। सङ्कलनया चाष्टसु सूक्तेषु सप्तोत्तरमेकशतं ( १०७ ) मन्त्रा एतद्दृष्टा भवन्ति।

इतिवृत्तम्—प्रजापतेर्हि अङ्गिरा नाम गोत्रप्रवर्तकः, ऋषिः, पुत्र आसीत्। अङ्गिरसो वंशे जह्नुर्नाम ऋषिरजायत।

जह्नोश्च वंशे सूयवसो नामर्षिस्तस्य च अजीगर्तो नाम पुत्रोऽभवत्। अरण्ये निवसतोऽस्याजीगर्तस्य शुनःपुच्छः शुनःशेपः शुनोलाङ्गूल इति त्रयः पुत्रा बभूवुः। एकदा रोहितो नाम हरिश्चन्द्रस्य राज्ञः पुत्रो अरण्ये परिभ्रमन्नजीगर्तं ददर्श। अजीगर्तोऽयमन्नालभेन क्षुत्परीत एव तदावतिष्ठत (अकर्मण्यत्वात्)। अथ तं तथाविधमवलोक्य रोहितो गोशतमूल्यप्रदानेन पुत्रमेकमात्मार्थं क्रेतुमुदयुङ्क्त। क्षुधार्दितश्च सोऽजीगर्तः एकं पुत्रं दातुमुपाक्रामत्। तदा शुनःपुच्छं पिता शुनोलाङ्गूलं च माता दातुं नोत्सेहे इति मध्यमः शुनःशेपः पितृभ्यां गवांशतेन रोहिताय विक्रीतः। रोहितोऽपि शुनश्शेपं गृहीत्वा अरण्यात् स्वगृहमुपेयाय। आगत्य च स्वपितरं हरिश्चन्द्रं जलोदरामयपीडितमवोचत् तात! मत्प्रातिनिध्येन शुनःशेपमेनं वरुणाय दत्वात्मानं मोचयेति। अथ हरिश्चन्द्रो वरुणं देवमुपसृत्य पुत्ररूपपशुसंपत्तये शुनःशेपेन ब्राह्मणेन त्वां यियक्षामीति प्रोवाच। वरुणश्च क्षत्रियाद् ब्राह्मणोऽभ्यधिको मे प्रिय इति तथेत्यङ्गीचकार, समुपदिदेश च राजसूये महाक्रतौ अभिषेचनीयाख्ये सोमयागे पुरुषपशोरालम्भनार्थम्। अथ संभृतसम्भारो हरिश्चन्द्रः वसिष्ठमृषिं ब्रह्मत्वेन, जमदग्निमध्वर्युत्वेन, विश्वामित्रं होतृत्वेन, अयास्यं चोद्गातृत्वेन वृत्वा यज्ञं प्रारभत। ततो यूपात्मकयज्ञस्तम्भे पुरुषपशोर्बन्धनमावश्यकमिति तत्र ब्राह्मणमेनं शुनःशेपं तत्र नियोक्तुं (बन्धनं कर्तुं) न कोऽप्युपाक्रामत्। तदा स एवाजीगर्तः गवां शतमभियाचँस्तत्र यूपे पाशेन बन्धुमुत्सेहे। प्रतिश्रुते च शतगवदाने तं तत्र बबन्ध। अथ बद्धे पुरुषपशौ आप्रीदेवताभ्यो हुतास्वाहुतिषु पशोःशुनःशेपस्य विशसनाय (मारणाय) न कोऽपि नृशंसः कृत्यं कर्तुं समुत्सेहे। तदा पुनरपि एतत्पितैवाजीगर्तो गोशतप्रदानेन विशसनमनुमेने। समुपादाय च निशितं चन्द्रहासं स्वतनयस्य समीपमुपागच्छन्ना-

सीत्। अथ शुनःशेपोऽसिहस्तं स्वपितरं हन्तुमागच्छन्तमवलोक्य निर्विण्णः स्वरक्षार्थं देवतानां शरणागतिमेव श्रेयसे निश्चिकाय, समस्तौच्च प्रजापतिं देवमृङ्मन्त्रेण, प्रार्थयच्च हार्देन पितृमातृदर्शनायैव स्वजीवितम्। अथ प्रजापतिना अग्निस्तुत्यर्थं अग्निना च सवितृस्तुतये, सवित्रा च वरुणस्तुतये निर्दिष्टो यथायथं मन्त्रैरस्तावीत्। तत्र वरुणं देवं 'यच्चिद्धि ते विशः' इति सूक्तेनैतेनैवास्तावीत्। सूक्तेनानेन स्तुतो वरुणः प्रीतः सन्नुवाच—वत्स! अग्निं देवतां स्तुहि, ततस्त्वामुत्स्रक्ष्याम इति। स्तुतोऽग्निर्विश्वान् देवान्, ते चेन्द्रं स्तोतुमुपादिशन्। स्तुतश्च पञ्चदशभिर्ऋग्भिरिन्द्रः प्रीतः शुनःशेपाय सौवर्णमश्वरथं दत्तवान्, आज्ञापयामास चाश्विनोः स्तुत्यर्थम्। ततः शुनःशेपस्तिसृभिर्ऋग्भिरश्विनावस्तावीत्। स्तूयमानयोश्चाश्विनोः प्रत्यृचं पाशः श्लथः, हरिश्चन्द्रस्य च जलोदरग्रस्तं प्रवृद्धमुदरमत्यल्पमिव भवति स्म। समाप्ते चाश्विने तृचे शुनःशेपस्य पाशो राज्ञो रोगश्च सर्वथा निवृत्तः। तदेव पाशेभ्यो मुक्तः शुनःशेपः सर्वेष्वपि विस्मितेषु, संप्रति कस्य पुत्रोऽयं मन्तव्य इति विचारे 'शुनःशेपस्य स्वेच्छैव नियामिका' इति महर्षिभिर्निर्णीते, शुनःशेपोऽयं होतुर्विश्वामित्रस्याऽङ्कमुपससाद। तदा जनकोऽस्याजीगर्तो विश्वामित्रं स्वपुत्रपरावर्तनायाह। विश्वामित्रस्तु देवैरयं प्राप्तजीवितो मह्यं दत्त इति 'देवरात' नाम्नायं ममैव पुत्रोऽस्तीत्यजीगर्तमुवाच। विश्वामित्रेण प्रत्याख्यातोऽजीगर्तः स्वपुत्रमाह्वयामास-वत्स! एहि स्वपूर्वजस्याङ्गिरसो महर्षेर्मा वंशादपगा इति। अथ शुनःशेपो 'शूद्रेभ्योऽप्यकरणीयं विशसनकृत्यं भवता सम्पादितं, विक्रीतश्चाहं गवां शतेने'ति प्रतिवद 'न्नसन्धेयं पातकमि'त्युक्त्वा विश्वामित्रेणानुमोदितस्तस्यैव पुत्रत्वमिच्छन् स्वस्याङ्गिरसत्वे वैश्वामित्रत्वं कथं स्यादिति व्यजिज्ञपत्। प्रतिशुश्राव च विश्वामित्रः

सर्वेषामेकशतपुत्राणां ज्येष्ठत्वेन परिकल्पनम्। समाहूय च शुनःशेपानुमतो सर्वानपि स्वपुत्रान् देवरातस्य शुनःशेपस्य ज्येष्ठत्वाङ्गीकृतये प्रोवाच। तत्र ज्येष्ठाः पंचाशत्पुत्रा देवरातस्य स्वाज्येष्ठत्वं न स्वीचक्रुरिति स्वादेशापरिपालनसञ्जातामर्षेण विश्वामित्रेण नीचत्वेन शप्ताः अन्ध्र-पुण्ड्र शबर-पुलिन्द-मूतिबाख्या दस्युजातयो जाताः। शिष्टाः पञ्चाशत्तनयास्तु स्वाज्येष्ठस्य मधुच्छन्दसो मुखेन पितुराज्ञां शिरसा वहन्तः शुनःशेपस्य ज्येष्ठभावं प्रतिपेदिर इति कपिल-बभ्रुगोत्रीयाणां बन्धुः सोऽयमङ्गिरोगोत्रोत्पन्नस्याजीगर्तस्य पुत्रः शुनःशेपो विश्वामित्रेण कृत्रिमपुत्रत्वेन स्वीकृतो देवरातनाम्ना संबोधितः। अत एव सर्वानुक्रमण्यां पठ्यते—'आजीगर्तः शुनःशेपः स कृत्त्रिमो वैश्वामित्रो देवरातः' इति।

### छन्दः परिचयः

अस्मिन् सूक्ते मन्त्राणां गायत्रीच्छन्दः। तल्लक्षणं यथा—'गायत्री सा चतुर्विंशत्यक्षरा पादाः। अष्टाक्षरास्त्रयः।' (ऋ० प्रा० १६।१६) इति। यत्राष्टाक्षरास्त्रयः पादा भवन्ति तद्गायत्रीच्छन्दः इत्यर्थः। अत्र सप्तममन्त्रस्य प्रथमे पादे, अष्टमस्य द्वितीये च सप्ताक्षराणीत्येकाक्षरन्यूनत्वात् गायत्र्या निचृत्त्वं भवति। 'ऊनाधिकेनैकेन निचृद्भूरिजौ' (पि०छ० ३।५९; द्र०ऋ०प्रा० १७।२) इति नियमात्। यत्रैकेनाक्षरेण न्यूनत्वं तत्र निचृत्त्वं, यत्र चैकाक्षराधिक्यं तत्र भूरिक्त्वं छन्दसो भवतीति तदर्थः। नवमस्य तृतीये पादे 'अधि आसते' इति सन्धिविच्छेदात्मको व्यूहः। दशमस्य प्रथमे अष्टौ अक्षराणि, शेषयोः सप्ताक्षराणि, तेन विराड्गायत्री, एकाक्षराधिका पादनिचृद्गायत्री वा भवति। यत्र द्वाभ्यामक्षराभ्यां न्यूनत्वं भवति तत्र छन्दसो विराट्त्वं भवति 'द्वाभ्यां विराट्स्वराजौ' ( पि० छ०

३।६०) इत्युक्तेः। द्वाभ्यामक्षराभ्यां न्यूनत्वे विराट्त्वं, अधिकत्वे च स्वराट्त्वं प्रतिपत्तव्यमिति तदर्थः। पादनिचृद्गायत्र्या लक्षणं तु 'क्वचित्त्रिपाद्दषिभिः। सा पादनिचृत्' (पि०छ० ३।९।१०) इति सप्ताक्षरैस्त्रिभिः पादैरुक्तम्। एकादशमन्त्रस्य प्रथमे पादे 'विश्वानि अद्भुता' इति सन्धिव्यूहः, चतुर्थे एकाक्षरन्यूनत्वाच्च निचृत्त्वम्। चतुर्दशस्य द्वितीये सप्ताक्षरत्वान्निचृत्त्वम्। पञ्चदशस्य पादनिचृद्गायत्री छन्दः, त्रिषु पादेषु सप्ताक्षरत्वात्। सप्तदशस्य द्वितीये मधु आभृतमिति सन्धिव्यूहः। एकोनविंशस्य तृतीये, विंशस्य प्रथमे च पादे सप्ताक्षरत्वान्निचृत्त्वम्। शेषं यथालक्षणमिति दिक्।

## देवतापरिचयः

अस्य सूक्तस्य वरुणो देवता। वरुणो ह्ययं मध्यस्थानीयो द्युस्थानीयश्च देवतेति नैरुक्ताः (१०।३, १२।२१)। तत्र आवृणोति ह्ययं मेघजालेन वियदिति मध्यस्थानीयः, आवृणोति आदत्ते रसानिति द्युस्थानीयो निरुच्यते। वृञ् वरणे (स्वा० उ०) धातोः कृ-वृ-दारिभ्यः उनन् (उ० ३।५०) इत्युनन्प्रत्यये गुणे णत्वे निष्पद्यते वरुणशब्दः। पुरुषविधत्वे ह्यय वरुणः खल्वाटः स्वेदनशीलशरीरः पिङ्गलवर्णाक्षयुक्तः शुक्लवर्णश्चास्तीति तैत्तिरीया वाजिनश्च समामनन्ति। देवोऽयमृणनाशकत्वेनाभिमतः ऋणनिरसनाय ऋषिभिः स्तूयते। एतेनैव हि प्रार्थितेन इक्ष्वाकुवंशजाताय हरिश्चन्द्राय रोहितो नाम पुत्रः प्रदत्तः। स्वीयं प्रतिश्रुतं पुरुषपशुमलभमानेन च राजा जलोदररोगेण पीडितः। वरुणदेवत्यो हि जलोदरो रोगः, पाशः शस्त्रं, अश्वश्च पशुः। मध्यस्थानीयदेवत्वाच्चास्य पुराणप्रसिद्धमपामधिपतित्वं न विसंवदति। वेदे वरुणोऽयं राजा, सम्राडिति वा विशेषणेनापि परिचीयते। वैदिकेऽश्वदाने प्रदात्रा यजमानेन जलोदररोगो मा

भूदिति वारुणाश्चतुष्कपालाः अश्वसमसंख्ययानुष्ठीयन्ते। वरुण-देवस्यैव संबन्धेन वरुणप्रघासाख्यं चातुर्मास्यं पर्वापि प्रसिद्धमिति।

*विनियोगपरिचयः*

सूक्तविनियोगः—स्वाराज्यकामस्य हि राज्ञो 'राजसूय' इति प्रसिद्धो यज्ञो विहितः। तत्र बहवः इष्टि-पशु-सोमयागा भवन्ति। तेषु अभिषेचनीय-दशपेयाख्यौ सोमयागौ सहैव तन्त्रेण भवतः। सोमयागनिष्पत्तये च तत्र बहुषु ग्रहसंज्ञकेषु पात्रेषु सोमरसो गृह्यते। तत्र मरुत्वद्देवताके ग्रहे गृहीते सति व्याघ्रचर्म आस्तीर्य तदुपरि परिहितवाससं राजानमुपवेश्य पलाशकाष्ठपात्रेण अध्वर्युः पुरोहितो वा, औदुम्बर-नैयग्रोधा-श्वत्थपात्रैर्यथाक्रमं राजभ्रातृ-मित्र-वैश्याः राजानमभिषिञ्चन्ति। अभिषेकान्ते च पुत्रा-मात्यपरिवृतस्य राज्ञः पुरस्तात्, आहवनीयाख्याग्न्यायतनस्य दक्षिणतश्च, सुवर्णमयसूत्रनिर्मिते कशिपौ उपविष्टो होता वैदिकं शौनःशेपमाख्यानं श्रावयति। शौनःशेपाख्याने हि शतमृचः एक-त्रिंशद्गाथाश्च सन्ति। तत्र ऋक्षु ऋग्वेदसंहितायाः प्रथमम-ण्डलस्य चतुर्विंशतितमसूक्तमारभ्य त्रिंशत्तमसूक्तपर्यन्तानामृ-चामाख्यानं भवतीति मध्यपतितस्यास्य वारुणसूक्तस्यापि तत्रैव विनियोगः।

मन्त्रविनियोगः—अस्ति अभिप्लवनामको हि यज्ञः। तत्र षड्दि-नानि यावत् प्रधानयागो भवतीति 'अभिप्लवः षडहः' इत्युच्यते। अस्मिन् षडहेऽग्निष्टोमधर्मा प्राप्ता भवन्ति। अग्निष्टोमे च होत्र-काणां कृते निश्चितानां शस्त्राणां पठनमावश्यकम्। होत्रकशब्देन च प्रशास्तृ—ब्राह्मणाच्छंसि—पोतृ—नेष्टृ—च्छावाकाग्नीध्रः ऋत्विजः कथ्यन्ते। तत्र मैत्रावरुणापरपर्यायः प्रशास्तृनामा ऋत्विगपि शस्त्रं पठति। मैत्रावरुणेनाधीयमानत्वात्तच्छस्त्रं मैत्रा-

वरुणशस्त्रमिति कीर्त्यते। तदेतन्मैत्रावरुणनामकशस्त्रमभिप्लव-षडहेऽपि प्राप्तम्। तदस्मिन्नभिप्लवे मैत्रावरुणशस्त्रे वारुणस्या-स्य सूक्तस्य ऋचः आवपनीया इति सूत्रकृतः। आवापो नाम ऋचां विशेष आगमः।

ऊनविंशतिमन्त्रविनियोगः। अस्ति हि चातुर्मास्यो नाम श्रौतो यज्ञः। तत्र वैश्वदेवः वरुणप्रघासः साकमेधः शुनासीरीयः इति चत्वारोऽवान्तरभागाः पर्वशब्देन व्यपदिश्यन्ते। तेषु वरु-णप्रघासाख्ये द्वितीये पर्वणि नव प्रधानदेवताः। तासु वरुणदे-वताया यागे हविः प्रदानात् पूर्वं देवताह्वानार्थं पुरोनुवाक्या-रूपेण सूक्तस्यास्यैकोनविंशतितमा 'इमं म' इति ऋग्विनियुज्यते।

*मन्त्रव्याख्यानम्*—

१

यच्चिद्धि ते विशो यथा प्र देव वरुण व्रतम्।
मिनीमसि द्यविद्यवि॥

* ज्योत्स्ना * [ अन्वयः ] हे वरुण! यथा विशः [ प्रमादं कुर्व-न्ति तथा वयं ] ते यत् चित् हि व्रतम् द्यविद्यवि प्र मिनीमसि।

[ हिन्दी ] *मनुष्य का स्वभाव*—हे वरुणदेव! जिस भाँति प्रजा स्वभाववश असावधानी करती है, वैसे ही हम भी तुमारे कार्य में प्रतिदिन (सर्वदा ही) विगाड़ किया करते हैं। उसे आप क्षमा करके हमारा कार्य साङ्ग—सफल बनाइए॥ १॥

** सायणभाष्यम् **

यच्चित् इति एकविंशत्यृचं द्वितीयं सूक्तम्। तथा चानुक्रान्तम् 'यच्चित् सैका' इति। 'ऋषिश्चान्यस्मात्' इति परिभाषया शुनःशेप एव ऋषिः। आदौ 'गायत्रम्' इति परिभाषितत्वात् गायत्री छन्दः। 'वारुणं तु' इति

पूर्वोक्तत्वात् तुह्यादिपरिभाषया ( अनु० १२,३ ) वरुणो देवता । १. विनियोग उक्तः शौनःशेपाख्याने । २. विशेषविनियोगस्तु—अभिप्लवषडहे इदं सूक्तं होत्रकशस्त्रे स्तोमनिमित्तमावापार्थम् । 'अभिप्लवपृष्ठ्याहानि' इति खण्डे तथैव सूत्रितं 'यच्चिद्धि ते विश इति वारुणमेतस्य तृचमावपेत मैत्रावरुणः, ( आश्व० श्रौ० ७।५, ) इति ॥

हे वरुण ! यथा लोके विशः प्रजाः कदाचित् प्रमादं कुर्वन्ति तथा वयमपि ते तव संबन्धि यच्चिद्धि यदेव किञ्चत् व्रतं कर्म द्यविद्यवि प्रतिदिनं प्र मिनीमसि प्रमादेन हिंसितवन्तः । तदपि व्रतं प्रमादपरिहारेण साङ्गं कुरु इति शेषः ।

यथा लित्स्वरेण आद्युदात्तत्वे प्राप्ते 'यथेति पादान्ते' ( फि० सू० ८५ ) इति सर्वानुदात्तत्वम् । मिनीमसि मीञ् हिंसायाम् । 'इदन्तो मसि' । 'क्रादिभ्यः श्ना' । 'मीनातेर्निगमे' ( पा० सू० ७।३।८१ ) इति ह्रस्वत्वम् । 'ई हल्यघोः' (पा० सू० ६।४।११३ ) इति ईकारः । 'सतिशिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्यः' इति वचनात् तिङ एव स्वरः शिष्यते । यद्वृत्तयोगात् निघाताभावः ॥

## ❀ स्कन्दस्वामिभाष्यम् ❀

१—२—यद्यपि तव विशः अन्ये मनुष्या यथैव तद्वद्वयमपि हे देव वरुण यागकर्म प्रकर्षेण हिंसामहे अहन्यहनि । प्रमादेन करणं अस्य यागस्य हिंसा । यद्यपि अन्यमनुष्यवत् अहन्यहनि प्रमादेन यागं कुर्मः तथापि मा अस्माकं तापाय हननाय च पूर्वक्रुद्धस्य वशं नेषीः इति वा । यदिति जसः ङसेर्वा लुक् । न मीञ्हिंसार्थः, माङ् माने इत्येव । ये वयं हे देव वरुण तव अन्यमनुष्यवत् साध्यासु उपस्थानं कुर्मः, यागं वा नित्यं यस्मादिति वा । तस्मात् तान् वा अस्मान् वा । वधस्तापे । हन्तुर्मरणे । हेडः क्रुध्ये । 'लिटः कानज्वा' ( पा० ३।२।१०६ ) इति । भूते वा लिट् । रध वश गमने । योऽस्मान् ताडयति मारयति च तस्य पूर्वक्रुद्धस्य मा

वश्यान् कार्षीः । हृण क्रोधे, हृञ् वा । श्ना व्यत्ययेन । वर्तमाने लटः शानच् च । इदानीं क्रुध्यतः । यः सांप्रतमेव क्रोद्धुमिच्छति तस्यापि क्रोधार्थं मास्मान् वश्यान् कार्षीः ॥ १-२ ॥

२

**मा नो वधाय हत्नवे जिहीड़ानस्य रीरधः ।**
**मा हृणानस्य मन्यवे ॥**

※ ज्योत्स्ना ※ [ अन्वयः ] ( हे वरुण ! ) जिहीड़ानस्य हत्नवे वधाय नः मा रीरधः । हृणानस्य मन्यवे मा 'रीरधः' ।

[ हिन्दी ] *अपराध की क्षमाप्रार्थना*—हे वरुणदेव ! अनादर करनेवाले की मार में ताड़ना के लिए हमें पात्र न बनाइए । आपके क्रुद्ध स्वरूप के क्रोध के पात्र हमें न बनाइए ॥ २ ॥

※ सा० भा० ※ हे वरुण ! जिहीड़ानस्य अनादरं कृतवतः हत्नवे हन्तुः पापिहननशीलस्य तव संबन्धिने त्वत्कर्तृकाय वधाय नः अस्मान् मा रीरधः संसिद्धान् विषयभूतान् मा कुरु । हृणानस्य हृणीयमानस्य क्रुद्धस्य तव मन्यवे क्रोधाय मा अस्मान् रीरधः ॥

वधाय 'हनश्च वधः' ( पा० सू० ३।३।७६ ) इति अबन्तो वधशब्दः । उञ्छादिषु पाठादन्तोदात्तः । हत्नवे 'हन हिंसागत्योः' । 'कृहनिभ्यां क्नुः' ( उ० सू० ३१७ ) इति क्नुप्रत्ययः, धातोर्नकारस्य तकारः । जिहीड़ानस्य 'हेड़ृ अनादरे' अस्मात् लिटः कानच् । द्विर्भावहलादिशेषह्रस्वचुत्वजश्त्वानि । एकारस्य इकारादेशश्छान्दसः । 'चितः' इत्यन्तोदात्तत्वम् । रीरधः 'राध साध संसिद्धौ' । चङि णिलोपे उपधाह्रस्वत्वम् । द्विर्वचनहलादिशेषह्रस्वत्वसन्वद्भावेत्वाभ्यासदीर्घाः । 'न माङ्योगे' इति अडभावः । हृणानस्य 'हृणीङ् लज्जायाम् । अस्मात् शानचि पृषोदरादित्वात् अभिमतरूपसिद्धिः ॥ २ ॥

※ स्क० भा० ※ [ ऋगियं पूर्वमन्त्रेण सह व्याख्याता ] ॥ २ ॥

३

विमृडीकाय ते मनो रथीरश्वं न संदितम् ।
गीर्भिर्वरुण सीमहि ॥

❀ ज्योत्स्ना ❀ [ अन्वयः ] हे वरुण ! रथीः संदितं अश्वं न मृडीकाय ते मनः गीर्भिः वि सीमहि ।

[ हिन्दी ] *स्तुति से क्रोध का दूर करना*—हे वरुण देव ! रथ का स्वामी थके हुए घोड़े को जिस तरह थकावट दूर करने के लिए घास आदि देकर प्रसन्न करता है वैसे ही हम अपने सुख के लिए आपके मनको स्तुति द्वारा प्रसन्न करते हैं ॥ ३ ॥

❀ सा० भा० ❀ हे वरुण ! मृडीकाय अस्मत्सुखाय ते तव मनः गीर्भिः स्तुतिभिः वि सीमहि विशेषेण बध्नीमः प्रसादयाम इत्यर्थः । तत्र दृष्टान्तः रथीः रथस्वामी संदितं सम्यक् खण्डितम् दूरगमनेन श्रान्तम् अश्वं न अश्वमिव । यथा स्वामी श्रान्तमश्वं घासप्रदानादिना प्रसादयति तद्वत् ।

रथीः मत्वर्थीय ईकारः । संदितं 'दो अवखंडने' । 'निष्ठा' इति क्तः । 'द्यतिस्यतिमास्थाम्' ( पा० सू० ७,४,४० ) इति ईकारान्तादेशः । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । गीर्भिः 'सावेकाचः' इति भिस उदात्तत्वम् । सीमहि 'षिवु तन्तुसन्ताने' । व्यत्ययेनात्मनेपदम् । 'बहुलं छन्दसि' इति विकरणस्य लुक् 'वलि लोपः' ( पा० सू० ६,१,६६ ) यद्वा 'षिञ् बंधने' इत्यस्मात् विकरणस्य लुक् । दीर्घश्छान्दसः ॥ ३ ॥

❀ स्क० भा० ❀ आत्मनो जिवितलक्षणाय सुखाय तव मनः । मद्धविरसौ । एनं भक्षयामि इति । रथीः सारथिः । दि बंधने । रथे सम्यक् बद्धं अश्वं रथीर्यथा विमोचयति । तद्वत् । स्तुतिभिः हे वरुण विषीमहि विगतान्तकर्म करोमि । वेः स्यतिर्विमोचने । विमुञ्चामः । षो अन्तकर्मणि इति श्वनि । षिञ् बन्धने इत्यस्यैव वा । विगतबन्धनं कुर्मः स्वन्मनः ॥३॥

४

परा हि मे विमन्यवः पतन्ति वस्य इष्टये ।
वयो न वसतीरुप ॥

* ज्योत्स्ना * [ अन्वयः ] वयः वसतीः उप 'पतन्ति' न, मे विमन्यवः ( बुद्धयः ) वस्यइष्टये परा पतन्ति हि ।

[ हिन्दी ] *जीवन की प्रार्थना*—हे वरुणदेव पक्षी जैसे अपने रहने के घोसलेको लौटने की इच्छा करते हैं, वैसे ही मेरी क्रोधरहित बुद्धि अत्यन्त वाञ्छनीय दीर्घकाल निवासरूप जीवन के लिए लौट रही है ॥ ४ ॥

* सा० भा० * हे वरुण मे मम शुनःशेपस्य विमन्यवः क्रोधरहिता बुद्धयः वस्यइष्टये वसीयसः अतिशयेन वसुमतो जीवनस्य प्राप्तये परा पतन्ति पराङ्मुखाः पुनरावृत्तिरहिताः प्रसरन्ति । हि शब्दः अस्मिन्नर्थे सर्वजनप्रसिद्धिमाह । परापतने दृष्टान्तः । वयो न पक्षिणो यथा वसतीः निवासस्थानानि उप सामीप्येन प्राप्नुवन्ति तद्वत् ।

पतन्ति पादादित्वात् निघाताभावः । वस्यइष्टये वसुमच्छब्दात् विन्मतोर्लुक् इति मतुपो लुकि टिलोप ईयसुनो यकारलोपश्छान्दसः । वसतीः 'शतुरनुमः' इति ङीप उदात्तत्वम् ॥ ४ ॥

* स्क० भा० * मन कामे । कामाः विपरापतन्ति विविधं त्वां प्रति प्राप्नुवन्ति वसुनः प्राप्तये । इष् गतौ । धनस्य अधिगत्यै । यथा पक्षिणः स्वनिवासानि प्रति तद्वत् ॥ ४ ॥

५

कदा क्षत्रश्रियं नरमा वरुणं करामहे ।
मृडीकायोरुचक्षसम् ॥

* ज्योत्स्ना * [ अन्वयः ] मृडीकाय क्षत्रश्रियं उरुचक्षसं नरं वरुणं कदा आ करामहे ।

[ हिन्दी ] *वरुणदेव को बुलाने की इच्छा*—हम अपने सुख के लिए बलप्रेमी बहुदर्शी नेता वरुणदेव को कब बुलावें ॥ ५ ॥

* सा० भा० * **मृडीकाय** अस्मत्सुखाय **वरुणं कदा** कस्मिन् काले **आ कराम हे** अस्मिन् कर्मणि आगतं करवाम। कीदृशम्। **क्षत्रश्रियं** बलसेविनं **नरं** नेतारं **उरुचक्षसं** बहूनां द्रष्टारम्।

क्षत्रश्रियम् क्षत्राणि श्रयतीति क्षत्रश्रीः 'क्विब्वचि' ( पा० ३।२ १७८।२ ) इत्यादिना क्विप् दीर्घश्च। कृदुत्तरपदप्रकृतिस्वरत्वम्। नरम् 'ऋदोरप्' इति अबन्तः आद्युदात्तः। **करामहे** करोतेः व्यत्ययेन शप्। उरुचक्षसम् चक्षेर्बहुलं शिच्च ( उ० सू० ६८२ ) इत्यसुन्। शिद्वद्भावात् ख्याञादेशाभावः ॥ ५ ॥

* स्क० भा० * कदा। क्षत्रं बलधनयोः। तद्यत्र श्रयति तम्। बलवन्तं धनवन्तं वा। नराकारं वरुणं आकरामहे अर्वागात्माभिमुखं करिष्यामः। मज्जीवनसुखाय बहूनां द्रष्टारं बहुदर्शनं वा। विमोचनविलम्बनात् परिदेवना एषा ॥ ५ ॥

[ इति वरुणसूक्ते प्रथमः ( १६ ) वर्गः ]

६

**तदित्समानमाशाते वेनन्ता न प्रयुच्छतः।**
**धृतव्रताय दाशुषे ॥**

* ज्योत्स्ना * [ अन्वयः ] **धृतव्रताय दाशुषे वेनन्ता समानं तत् इत् आशाते। न प्रयुच्छतः।**

[ हिन्दी ] *देवताओं का हविर्ग्रहण और सावधानी*—यज्ञादि कार्य में निरत, हवि देनेवाले यजमान के लिए इच्छा करते हुए मित्रावरुण देवता हमारे द्वारा दी गई साधारण हवि को प्राप्त करते हैं। कभी भी प्रमाद ( अनवधानता ) नहीं करते हैं ॥ ६ ॥

* सा० भा० * **धृतव्रताय** अनुष्ठितकर्मणे **दाशुषे** हविर्दत्तवते यजमानाय **वेनन्तौ** कामयमानौ मित्रावरुणाविति शेषः। तावुभौ

समानं साधारणं तदित् अस्माभिर्दत्तं तदेव हविः आशाते अश्नुवाते। न प्र युच्छतः कदाचिदपि प्रमादं न कुरुतः।

आशाते अश्नोतेर्लिटि द्विर्भावहलादिशेषौ। 'अत आदेः' (पा० सू० ७।४।७०) इति आत्वम्। 'अनित्यमागमशासनम्' इति वचनात् 'अश्नोतेश्च' (पा० सू० ७।४।७२) इति नुडभावः। वेनन्ता वेनतिः कान्तिकर्मा, 'सुपां सुलुक्' इति आकारः। प्रयुच्छतः 'युच्छ प्रमादे'। दाशुषे 'दाशृ दाने' इत्यस्मात् 'दाश्वान् साह्वान्' इति क्वसुप्रत्ययो निपातितः। 'वसोः संप्रसारणम्' इति संप्रसारणम् 'शासिवसिघसीनां च' इति षत्वम् ॥ ६ ॥

* स्क० भा० * अशू व्याप्तौ, अश भक्षणे (वा)। तत् यजमानः यद्धविर्ददाति तत् साधारणं मित्रावरुणयोः, तौ व्याप्नुतः भक्षयतः वा। विन कामने। शतृ च गुणश्च। कामयमानौ। युच्छ प्रमादे। यजमानः केवलाय वरुणाय एव ददाति चेत् अवश्यं उभावपि आशाते न प्रमाद्यतः। अपरित्यक्तकर्मणे यजमानाय उपकर्तुम्। अथवा आशाते इति लोटि लट्। व्यत्ययेन अतां-वहौ। आवां हरिश्चन्द्र-शुनःशेपौ तत् साधारणं आयुः अश्नवावहै कामयमानौ। न प्रमाद्यावः। अत्रापि तस् वसि। यागे स्तुतौ। यतः स्वकर्मणां परित्यक्त्रे स्तोतृभ्यः कामानां दात्रे च वरुणाय यो यागः स्तुतिर्वा तत्र यतो न प्रमाद्यावः, ततः आयुरश्नवावहै ॥ ६ ॥

७

वेदा यो वीनां पदमन्तरिक्षेण पतताम्।
वेद नावः समुद्रियः ॥

* ज्योत्स्ना * [ अन्वयः ] अन्तरिक्षेण पततां वीनां पदं यो वेद। (यश्च) समुद्रियः नावः 'पदं' वेद। [ स बन्धनान्मोचयतु ]

[ हिन्दी ] *वरुणदेव का ज्ञान*—जो वरुणदेव आकाशमें उड़ने वाले पक्षियों की गति-स्थिति को जानता है। तथा जो समुद्र

की नावों की गति-स्थिति को जानता है। वह हमें बन्धन से मुक्त करे ॥ ७ ॥

॥ सा० भा० ॥ अन्तरिक्षेण पतताम् आकाशमार्गेण गच्छताम् वीनां पक्षिणां पदं यः वरुणः वेद। तथा समुद्रियः समुद्रेऽवस्थितः वरुणः नावः जले गच्छन्त्याः पदं वेद जानाति सोऽस्मान् बन्धनात् मोचयत्विति शेषः।

वेद 'विद ज्ञाने' 'विदो लटो वा' ( पा० सू० ३।४।८३ ) इति तिपो णल्। लित्स्वरेणाद्युदात्तत्वम्। 'द्व्यचोऽतस्तिङः' इति संहितायां दीर्घः। वीनाम् 'नामन्यतरस्याम्' इति नाम उदात्तत्वम्। पतताम् शपः पित्वात् अनुदात्तत्वम्। शतुश्च लसार्वधातुकस्वरेण धातुस्वरः। नावः 'सावेकाचः' इति षष्ठ्या उदात्तत्वम्। समुद्रियः भवार्थे 'समुद्राभ्राद्घः' ( पा० सू० ४।४।११८ ) इति घप्रत्ययः ॥ ७ ॥

॥ स्क० भा० ॥ यो वरुणो अन्तरिक्षेण गच्छतां पदं वेद पक्षिणामपि पांसुवर्जितत्वात् दुर्ज्ञेयमपि वीनां च अन्येषां च पदं जानाति। समुद्रे भवाया अपि नावः पदं च यो वेद ॥ ७ ॥

८

वेद मासो धृतव्रतो द्वादश प्रजावतः।
वेदा य उपजायते ॥

॥ ज्योत्स्ना ॥ [अन्वयः] धृतव्रतः प्रजावतः द्वादश मासः वेद। यः 'मासः' उपजायते ( तमपि ) वेद।

[ हिन्दी ] *वरुणदेव की दृढ कर्तव्यनिष्ठा तथा ज्यौतिषज्ञान*—जिसने कर्म ( कार्य ) को स्वीकार कर लिया है ऐसा वरुण देवता समय, समय पर उत्पन्न होने वाली प्रजाओं से युक्त बारह महिनों को जानता है। तथा जो महिना बढ़ता है उस अधिक मास को भी जानता है ॥ ८ ॥

* सा० भा० * **धृतव्रतः** स्वीकृतकर्मविशेषो यथोक्तमहिमोपेतो वरुणः **प्रजावतः** तदा तदोत्पद्यमानप्रजायुक्तान् **द्वादश मासः** चैत्रादीन् फाल्गुनान्तान् **वेद** जानाति । **यः** त्रयोदशोऽधिकमासः **उपजायते** सवत्सरसमीपे स्वयमेवोत्पद्यते तमपि **वेद** । वाक्यशेषः पूर्ववत् ।

**मासः** 'पद्दन्' ( पा० सू० ६।१।६३ ) इत्यादिना मासशब्दस्य मास् इति आदेशः । 'ऊडिदम्' इत्यादिना शस उदात्तत्वम् । **द्वादश** द्वौ च दश च इति द्वन्द्वः । 'द्व्यष्टनः संख्यायाम्' ( पा० सू० ६।३।४७ ) इति आत्वम् । 'सङ्ख्या' ( पा० सू० ६।२।३५ ) इति सूत्रेण पूर्वपद प्रकृतिस्वरत्वम् । **प्रजावतः** 'जनी प्रादुर्भावे' प्रपूर्वात् 'जनसनखनक्रमगमो' (पा०सू० ३।२।६७) विट् प्रत्ययः 'विड्वनोः' (पा० सू० ६।४।४१) इति आत्वम् । कृदुत्तरपदप्रकृतिस्वरत्वम् । प्रजा एषां सन्तीति 'तदस्यास्त्यस्मिन्निति मतुप्' ( पा० सू० ५।२।९४ ) । 'मादुपधायाः' ( पा० सू० ८।२।९ ) इति मतुपो वत्वम् । **उपजायते** जनेः कर्मकर्तरि लट् । कर्मवद्भावात् आत्मनेपदं यक् ( पा० सू० ३।१।८७ ) । 'जनादीनामुपदेश एवात्वं वक्तव्यम्' ( पा० सू० ६।१।१९५।वा० ) इति वचनात् 'अचः कर्तृयकि' ( पा० सू० ६।१।१९५ ) इत्याद्युदात्तत्वम् । 'तिङि चोदात्तवति' ( पा० सू० ८।१।७१ ) इति उपसर्गस्य निघातः । न च 'तिङ्ङतिङः' इति निघातः 'यद्वृत्तान्नित्यम्' इति प्रतिषेधात् ॥ ८ ॥

* स्क०भा० * यः अपरित्यक्तकर्मा द्वादश मासः वेद । माः चन्द्रमाः । 'वृको मसः' इति चन्द्रे । द्वादश मासा एवात्र । प्रजासहितान् । प्रजा अपि वेद, य उपजायते तमपि । उपजातस्त्रयोदश इति, अधिमासः तम् ॥ ८ ॥

९

**वेद वातस्य वर्तनिमुरोर्ऋष्वस्य बृहतः ।**
**वेदा ये अध्यासते ॥**

※ ज्योत्स्ना ※ [ अन्वयः ] उरोः ऋष्वस्य बृहतः वातस्य वर्तनिं वेद । ये अधि आसते ( तानपि ) वेद ।

[ हिन्दी ] *वायुमार्ग और लोकों का ज्ञान*—विशाल सुन्दर और गुणों से अधिक वायु के मार्ग को वरुणदेव जानता है। और जो देवता ऊपर के लोकों में रहते हैं उनको भी जानता है ॥९॥

※ सा० भा० ※ उरोः विस्तीर्णस्य ऋष्वस्य दर्शनीयस्य बृहतः गुणैरधिकस्य वातस्य वायोः वर्तनिं मार्गं वेद वरुणो जानाति । ये देवाः अध्यासते उपरि तिष्ठन्ति तानपि वेद जानाति ।

वातस्य 'असिहसि' इत्यादिना तन्प्रत्ययान्तो वातशब्दो नित्वादाद्युदात्तः। वर्तनिं वर्ततेऽनेनेति 'वर्तनिः स्तोत्रे' (पा० सू० ६।१।१६० ग०) इति स्तोत्रवाचकस्य वर्तनिशब्दस्य अन्तोदात्तत्वसिद्ध्यर्थम् उञ्छादिषु पाठात् अस्य प्रत्ययस्वरेण मध्योदात्तत्वे प्राप्ते व्यत्ययेनान्तोदात्तत्वम्। बृहतः 'बृहन्महतोरुपसंख्यानम्' इति ङस उदात्तत्वम्। अध्यासते लसार्वधातुकानुदात्तत्वे सति धातुस्वरः ॥ ९ ॥

※ स्क० भा० ※ यश्च वायोर्मार्गं विस्तीर्णस्य महतो बलवतः, महतो वेगेन शीघ्रस्य । उरुर्विस्तीर्णे। ऋष्व-बृहतौ महति व्याप्तौ बले वेगे च इमे। व्याप्तस्य महाबलवतः महावेगवतः इत्यर्थः । ये उपरि आसते देवादयः तांश्च यो वेद तस्मै वरुणाय न प्रयुच्छतः । तद्यागान् स्तुतीश्च कुर्वः एव ॥ ९ ॥

१०

नि षसाद धृतव्रतो वरुणः पस्त्या३स्वा ।
साम्राज्याय सुक्रतुः ॥

※ ज्योत्स्ना ※ [ अन्वयः ] धृतव्रतः सुक्रतुः साम्राज्याय वरुणः पस्त्यासु आ नि षसाद ।

[ हिन्दी ] *साम्राज्य की सफलता*—दृढ़व्रत, अच्छे कर्तव्य वाले

**वरुणदेव साम्राज्य की सफलता के लिए दैवी विभूति संपन्न प्रजाओं में बैठे हुए हैं ॥ १० ॥**

* सा० भा० * **धृतव्रतः** पूर्वोक्तः **वरुणः पस्त्यासु** दैवीषु प्रजासु **आ निषसाद** आगत्य निषण्णवान् । किमर्थम् । प्रजानां **(साम्राज्याय)** साम्राज्यसिद्धयर्थम् **सुक्रतुः** शोभनकर्मा ।

**निषसाद** 'सदिरप्रतेः' (पा० सू० ८।३।६६) इति षत्वम्। **साम्राज्याय** सम्राजो भावः साम्राज्यम् 'गुणवचनब्राह्मणादिभ्यः' (पा० सू० ५।१।१२४) इति ष्यञ् । 'ञ्नित्यादिर्नित्यम्' इत्याद्युदात्तत्वम्। **सुक्रतुः** 'क्रत्वादयश्च' इत्युत्तरपदाद्युदात्तत्वम् ॥ १० ॥

* स्क० भा० * य एतानि वेद स निषसाद इति वा । धृतकर्मा वरुणः । सर्वेषां वा यज्ञस्य वा लोकपालत्वात् । कुटीकुत्वाभिप्रायो डुपच् (पा० ५।३।८८-८९) गृहेषु । सर्वयज्ञस्य आधिपत्याय निषीदति । सुकर्मा सुप्रज्ञश्च । 'पस्त्या हर्म्यं गयः पदम्' इति गृहे ॥ १० ॥

[ इति वरुणसूक्ते द्वितीयः (१७) वर्गः ]

११

**अतो विश्वान्यद्भुता चिकित्वाँ अभि पश्यति ।**
**कृतानि या च कर्त्वा ॥**

* ज्योत्स्ना * [ अन्वयः ] **अतः विश्वानि अद्भुता चिकित्वान् या कृतानि कर्त्वा च ( तानि ) अभि पश्यति ।**

[ हिन्दी ] *वरुणदेव की उपासना का फल*—**इस वरुणदेव (की उपासना ) के कारण सम्पूर्ण आश्चर्य कारक बातों को बुद्धिमान् मनुष्य सब जगह देखता है, जिनको वरुण देवताने पहिले किया था, या करेगा ॥ ११ ॥**

* सा० भा० * **अतः** अस्मात् वरुणात् **विश्वानि अद्भुता** सर्वाण्याश्चर्याणि **चिकित्वान्** प्रज्ञावान् **अभि पश्यति** सर्वतोऽवलोकयति । **या कृतानि** यान्याश्चर्याणि पूर्वं वरुणेन सम्पादितानि । **च** का

रात् अन्यानि यान्याश्चर्याणि कृत्वा इतः परं कर्तव्यानि तानि सर्वाणि अभिपश्यतीति पूर्वत्रान्वयः ।

अद्भुता 'शेश्छन्दसि बहुलम्' ( पा० सू० ६।१।७० ) इति शेर्लोपः । प्रत्ययलक्षणेन 'नपुंसकस्य झलचः' ( पा० सू० ७।१।७२ ) इति नुम् । नलोपः । चिकित्वान् 'कित् ज्ञाने' लिटः क्वसुः । अभ्यासहलादिशेष-चुत्वानि । 'वस्वेकाजाद्घसाम्' इति नियमात् इडभावः । रुत्वानुनासिका-वुक्तौ संहितायाम् । पश्यति 'पाघ्रा' इत्यादिना दृशेः पश्यादेशः । कर्त्वा 'कृत्यार्थे तवैकेन्केन्यत्वनः' ( पा० सू० ३।४।१४ ) इति करोतेः त्वन् । नित्वादाद्युदात्तत्वम् । पूर्ववत् शेर्लोपः ॥ ११ ॥

* स्क० भा० * अतो द्युलोकादागत्य । अत्र पृथिव्यां इति वा । ज्ञा ज्ञप्तिः । 'अद्भुतं चरितं कर्त्वम्' इति कर्मणि । लोकानां शुभाशुभकर्माणि ज्ञाता प्रत्यवेक्षते, लोकपालत्वात्, वरुणः कृतानि यानि च कर्तव्यानि । यस्य प्राणिनो यानि शुभाशुभानि तस्य तत्फलदानार्थं प्रतिपाल्यते ॥ ११ ॥

१२

**स नो विश्वाहा सुक्रतुरादित्यः सुपथा करत् ।**
**प्र ण आयूंषि तारिषत् ॥**

* ज्योत्स्ना * [ अन्वयः ] सुक्रतुः सः आदित्यः विश्वाहा नः सुपथा करत् । नः आयूंषि प्र तारिषत् ।

[ हिन्दी ] *सुमार्ग गमन और आयु वर्धन की प्रार्थना*—अच्छा बुद्धिमान् वह अदिति का पुत्र वरुण, सब दिन हमें अच्छे मार्ग से संपन्न ( सुमार्गगामी ) करे और हमारी आयु बढ़ावे ॥१२॥

* सा० भा० * सुक्रतुः शोभनप्रज्ञः सः आदित्यः वरुणः विश्वाहा सर्वेष्वहःसु नः अस्मान् सुपथा शोभनमार्गेण सहितान् करत् करोतु । किं च नः अस्माकम् आयूंषि प्र तारिषत् प्रवर्धयतु ।

सुपथा 'स्वती पूजायाम्' ( पा० म० २।२।१८।४ ) समासे

'न पूजनात्' ( पा० सू० ५।४।६९ ) इति समासान्तप्रतिषेधः। अव्ययपूर्वपदप्रकृतिस्वरे प्राप्ते 'परादिश्छन्दसि बहुलम्' इत्युत्तरपदाद्युदात्तत्वम्। 'क्त्वादयश्च' ( पा० सू० ६।२।११८ ) इत्येतन्न भवति अबहुव्रीहित्वात्। बहुव्रीहौ हि तद् विधीयते। 'आद्युदात्तं द्व्यच्छन्दसि' (पा० सू० ६।२।११९ ) इत्येतदपि न भवति पथिन्शब्दस्य अन्तोदात्तत्वात्। करत् करोतेर्लेटि व्यत्ययेन शप्। शपो लुकि 'लेटोऽडाटौ' इति अडागमः। 'इतश्च लोपः' इति इकारलोपः। यद्वा—छान्दसे लुङि 'कृमृदृरुहिभ्यः' ( पा०सू० ३।१।५९ ) इति च्लेः अङ्। 'ऋदृशोऽङि गुणः' ( पा०सू० ७।४।१६) इति गुणः। बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः प्र णः 'उपसर्गाद्' ( पा०सू० ८।४।२८ ) बहुलम् इति नसो णत्वम्। तारिषत् तारयतेः लेटि अडागमः। 'सिब्बहुलम् लेटि' इति सिप्। 'आदेशप्रत्यययोः' इति षत्वम्॥ १२॥

* स्क० भा० * य इदं करोति स आदित्यः सुप्रज्ञः सुकर्मा वा अस्मान् सर्वेषु अहस्सु शोभनेन पथा नयतु। सर्वदा अभिप्रेतेषु तं तं पन्थानम् उपदिशतु येन प्रवृत्ता वयं अभिप्रेतानि प्राप्नुमः। प्रवर्धयतु अस्माकमायूंषि च। प्रात् तिरतिः वृद्धौ॥ १२॥

## १३

विभ्रद् द्रापिं हिरण्ययं वरुणो वस्त निर्णिजम्।
परि स्पशो नि षेदिरे॥

* ज्योत्स्ना * [ अन्वयः ] हिरण्ययं द्रापिं बिभ्रत् वरुणः निर्णिजं वस्त। स्पशः परि नि षेदिरे।

[ हिन्दी ] *वरुणदेव का स्वरूप*—सुवर्णमय कवच को धारण करता हुआ वरुणदेव ( शुद्ध ) पुष्ट अपने शरीर को ढके रहता है। और उस सुवर्णकवच को स्पर्श करने वाली ( वरुण के शरीर की ) किरणें चारों ओर वर्तमान हैं॥ १३॥

* सा० भा० * हिरण्ययं सुवर्णमयं द्रापिं कवचं बिभ्रत् धारयन् वरुणः निर्णिजं पुष्टं स्वशरीरं वस्त आच्छादयति। स्पशः हिरण्यस्पर्शिनो रश्मयः परि नि षेदिरे सर्वतो निषण्णाः।

बिभ्रत् बिभर्तेः शतरि 'नाभ्यस्ताच्छतुः' (पा० सू० ७।१।७८) इति नुमभावः। 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम्। द्रापिम् 'द्रा कुत्सायां गतौ' द्रापयति इपून् कुत्सितां गतिं प्रापयतीति द्रापिः कवचम्। 'अर्तिह्री' (पा० सू० ७।३।३६) इत्यादिना पुगागमः। औणादिके इप्रत्यये णिलोपः। हिरण्ययम् 'ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि च्छन्दसि' (पा० सू० ६।४।१७५) इति हिरण्यशब्दात् विकारार्थे विहितस्य मयटो मशब्दलोपो निपातितः। वस्त 'वस आच्छादने'। लङि अदादित्वात् शपो लुक्। पूर्ववत् अडभावः। निर्णिजम् 'णिजिर् शौचपोषणयोः'। स्पशः 'स्पश बाधनस्पर्शनयोः' 'क्विप् च' इति क्विप्। नि षेदिरे षद्लृ विशरणगत्यवसादनेषु' अस्मात् गत्यर्थात् कर्मणि लिटि एत्वाभ्यासलोपौ। 'सदिरप्रतेः' इति षत्वम्॥ १३॥

* स्क० भा० * उदयोत्तरकाले। 'द्रापिरस्तं च निर्णिजः' इति कवचे। धारयन् कवचं हिरण्मयम्। वरुण आच्छादयति रूपम्। वस आच्छादने। 'वप्सो निर्णिग्वपुः प्सरः' इति रूपे। 'नामोस्राः समिधः स्पशः' इति रश्मिषु। वरुणरश्मयः परिनिषेदिरे। कृताकृतप्रत्यवेक्षणार्थं प्राणिनां परितः निषीदन्ति। अथवा निर्णिक् घटादिद्रव्यरूपम् अनात्मरूपम्। उदयोत्तरकालं आबद्धहिरण्मयकवचो वरुणः रश्मिभिः आच्छादयति घटादिद्रव्यरूपम्। रश्मिभिः तमः अपनीय यावत् किञ्चिद्रूपं तत्सर्वं प्रकाशयति इत्यर्थः। तत्सहचरिताश्च देवानां स्पशः प्राणिकर्मज्ञानार्थं सर्वतो निषीदन्ति इति पुराणेषु प्रसिद्धम्।

'आदित्यचन्द्रावनलानिलौ च, द्यौर्भूमिरापो हृदयं यमश्च।
अहश्च रात्रिश्च उभे च सन्ध्ये, धर्मश्च जानाति नरस्य वृत्तम् इति ॥१३॥

## १४

**न यं दिप्सन्ति दिप्सवो न द्रुह्वाणो जनानाम् ।**
**न देवमभिमातयः ॥**

❀ ज्योत्स्ना ❀ [ अन्वयः ] दिप्सवः यं न दिप्सन्ति । जनानां द्रुह्वाणः न (द्रुह्यन्ति) । अभिमातयः देवं न ( स्पृशन्ति ) ।

( हिन्दी ) *वरुणदेव का प्रभाव*—हिंसक वैरी जिस वरुण की ( डरते हुवे ) हिंसा की इच्छा छोड़ देते हैं । प्राणियों के द्रोह करने वाले व्यक्ति जिस वरुण से द्रोह नहीं करते हैं । पापपुञ्ज भी वरुण देवता का स्पर्श नहीं करते हैं ॥ १४ ॥

❀ सा० भा० ❀ **दिप्सवः** हिंसितुमिच्छन्तो वैरिणः यं वरुणं न **दिप्सन्ति** भीताः सन्तो हिंसितुमिच्छां परित्यजन्ति । **जनानां** प्राणिनां **द्रुह्वाणः** द्रोग्धारोऽपि यं वरुणं प्रति न द्रुह्यन्ति । **अभिमातयः** पाप्मानः 'पाप्मा वा अभिमातिः' ( तै० सं० २।१।३।५ ) इति श्रुत्यन्तरात् । **देवं** तं वरुणं **न** स्पृशन्ति ।

**दिप्सन्ति** 'दम्भु दम्भे' अस्मात् सनि 'सनीवन्तर्ध' ( पा० सू० ७।२।४९ ) इत्यादिना इडभावः । 'हलन्ताच्च' ( पा० सू० १।२।१० ) इत्यत्र हल्ग्रहणस्य जातिवाचित्वात् सनः कित्वात् 'दम्भ इच्च' (पा० सू० ७।४।५६ ) इति दकारात् परस्य अकारस्य इकारः । 'अनिदिताम्' इति नलोपः । भसभावाभावश्छान्दसः (पा० सू० ८।२।३७) 'अत्र लोपोऽभ्यासस्य' ( पा० सू० ७।४।५८ ) इति अभ्यासलोपः । शपः पित्वादनुदात्तत्वम् । तिङश्च लसार्वधातुकस्वरेण सनो नित्वात् निस्वरेणाद्युदात्तत्वम् । यद्वृत्तयोगात् अनिघातः । **दिप्सवः**सन्नन्तात् दम्भेः 'सनाशंसभिक्ष उः' (पा० सू० ३।२।१६८) इति उप्रत्ययः । प्रत्ययस्वरः । **द्रुह्वाणः** 'द्रुह जिघांसायाम्' 'अन्येभ्योऽपि दृश्यन्ते' इति क्वनिप् । प्रत्ययस्य पित्वादनुदात्तत्वे धातुस्वरेणाद्युदात्तत्वम् ॥ १४ ॥

❀ स्कं० भा० ❀ दम्भु हिंसायां 'धातोः कर्मणः समानकर्तृका-दिच्छायां वा' ( पा० ३।१।७ ) इति सन्। 'सन्यङोः ( पा० ६।१।९ ) इति द्विः। 'हलादिः शेषः' (पा० ८।४।६०) 'खरि च' (पा० ८।४।५५) इति चर्त्वम्। अभ्यासलोपश्च। 'अत्र लोपोऽभ्यासस्य' ( पा० ७।४।५८ ) इति 'दम्भ इच्च' ( पा० ७.४.५६ ) इति दिप्सा.........'सनाशंसभिक्ष उः' ( पा० ३।२।१६८ ) इति दिप्सुः। 'दिप्सवो राधसः स्पृधः' इति शत्रौ। द्रुह द्रोहे। अभिमातिर्हिंसा। यं वरुण जिघांसका असुरा न जिघांसन्ति नापि द्रोग्धारो मनुष्याणाम्। तद्धिंसका चोरादयः। तेऽपि तं न हिंसन्ति। असुरैः चोरादिभिर्वा प्रयुज्यमाना हिंसाश्च न हिंसन्ति। देवं वरुणं नॄन् वा। 'ते हिष्मावनुषः' ( ऋ०८.२४.१५ ) इत्यत्रवत् हिंसा-यामेव अभिमातिः ॥ १४ ॥

१५

उत यो मानुषेष्वा यशश्चक्रे असाम्या।
अस्माकमुदरेष्वा ॥

❀ ज्योत्स्ना ❀ [ अन्वयः ] उत यः मानुषेषु यशः आ चक्रे, आ असामि, अस्माकम् उदरेषु आ।

[ हिन्दी ] *हमारे खाद्य की उत्पत्ति*— और जो वरुणदेव मनुष्योंमें ( उनके लिए ) बहुत अन्न पैदा करता है। सब तरह से पूरा करता है, कमी नहीं करता, तथा जो हमारे पेट के लिए तो सब ओर से अन्न ( खाद्य ) पैदा करता है ॥ १५ ॥

❀ सा० भा० ❀ उत अपि च यः वरुणः मानुषेषु यशः अन्नम् आ चक्रे सर्वतः कृतवान् स वरुणः कुर्वन्नपि आ सर्वतः असामि संपूर्णं चक्रे नतु न्यूनं कृतवान्। विशेषतः अस्माकं उदरेषु आ सर्वतः चक्रे।

मानुषेषु। 'मनोर्जातावञ्यतौ षुक् च' ( पा०सू०४।१।१६१ ) इति अञ्। 'ञ्नित्यादिर्नित्यम्' इत्याद्युदात्तत्वम्। चक्रे प्रत्ययस्वरः। असामि

'अव्यये नञ्कुनिपातानामिति वक्तव्यम्' ( पा० सू० ६. २. २. वा ) इति। अव्ययपूर्वपदप्रकृतिस्वरत्वम्। यशः 'अशेर्युट् च'। (उ० सू० ६४०) इति असुन्। उदरेषु 'उदि दृणातेरजलौ पूर्वपदान्त्यलोपश्च' (उ०सू० ७०७) इति अल्। लित्स्वरः। 'गतिकारकोपपदात्' इत्युत्तरपदप्रकृतिस्वरत्वम्॥ १५॥

❀ स्क० भा० ❀ उत यः वरुणः मानुषेषु च दैवेषु च अन्नमाभीक्ष्ण्येन करोति। सकलमस्माकं च तिर्यक्सदृशानां नृणां उदरेषु च। आङ् त्रितयात् आद्यन्तौ चार्थे। 'देवेभ्यश्च पितृभ्य आ' (ऋ०वे० १०।१५।११) इतिवत्। तच्छ्रुतेश्च योग्यद्वितीयसमुच्चयाध्याहारः। मानुषप्रदानं वृष्टिप्रदानेन अन्नेन तद्यागादिना देवानाम्। 'ब्रह्म पीवो यशो गिरः' इत्यन्ने। सामि अर्धपर्यायः। असामि प्रभूतम्॥ १५॥

[ इति वरुणसूक्ते तृतीयः ( १८ ) वर्गः ]

१६

परा मे यन्ति धीतयो गावो न गव्यूतीरनु।
इच्छन्तीरुरुचक्षसम्॥

❀ ज्योत्स्ना ❀ [ अन्वयः ] उरुचक्षसं इच्छन्तीः मे धीतयः परा यन्ति। गावो न गव्यूतीः अनु 'यन्ति'।

[ हिन्दी ] वरुणदेव में भक्ति—उस बहुतों द्वारा दर्शनीय वरुणदेव को चाहती हुई मेरी बुद्धि सब ओर से लौट आती है। जैसे गौवें अपने गोशाला का लक्ष्य करके लौट आती हैं॥ १६॥

❀ सा० भा० ❀ उरुचक्षसं बहुभिर्द्रष्टव्यम् वरुणं इच्छन्तीः मे धीतयः शुनः शेपस्य बुद्धयः परा यन्ति पराङ्मुखाः निवृत्तिरहिता गच्छन्ति। तत्र दृष्टान्तः गावो न यथा गावः गव्यूतीरनु गोष्ठानि अनुलक्ष्य गच्छन्ति तद्वत्।

गव्यूतीः गावोऽत्र यूयन्ते इति अधिकरणे क्तिन्। 'गोर्यूतौ छन्दसि'

( पा० सू० ६।१।७९ वा० ) इति अवादेशः। दासीभारादित्वात् पूर्वपद-प्रकृतिस्वरत्वम्। यद्वा यूतिः यवनं गवां यवनमत्रेति बहुव्रीहौ पूर्वपदप्रकृति-स्वरत्वम्। इच्छन्तीः 'इषु इच्छायाम्'। लटः शतृ। 'तुदादिभ्यः शः'। 'इषुगमियमां छः ( पा० सू० ७।३।७७ ) इति छत्वम्। अदुपदेशात् लसार्वधातुकानुदात्तत्वे विकरणस्वरः शिष्यते ॥ १६ ॥

❀ स्क० भा० ❀ यः अन्नकर्ता तं वरुणं परागच्छन्ति मम प्रज्ञाः कर्माणि वा। धीरेव धीतिः। सा प्रज्ञा-कर्मणोः। मद्बुद्धयः मत्स्तुति-कर्माणि इति वा। आयुरिच्छन्त्यः बहुद्रष्टारं दर्शनं वा त्वाम्। यथा गावः। यस्मिन् भूप्रदेशे गावः चरन्ति स गव्यूतिः। गाव इव स्वचरणभुवः प्रति। अनु प्रतौ ॥ १६ ॥

१७

सं नु वोचावहै पुनर्यतो मे मध्वाभृतम्।
होतेव क्षदसे प्रियम् ॥

* ज्योत्स्ना * [ अन्वयः ] यतः मे मधु आभृतं, होतेव प्रियं क्षदसे। पुनः नु सं वोचावहै।

[ हिन्दी ] *वार्तालाप की प्रार्थना*—जिस कारण मेरे लिए मधुर हवि का संपादन किया गया, उसी कारण होमकर्ता के मधुर यज्ञशेष भक्षण की भाँति आप भी प्रिय हविष् का स्वाद लेते हैं। हविष् स्वीकार करने के बाद अवश्य ही आप और हम मिलकर प्रिय बातें करें ॥ १७ ॥

* सा० भा० * यतः यस्मात्कारणात् मे मज्जीवनार्थं ( मधु ) मधुर हविः आभृतं अञ्जःसवाख्ये कर्मणि संपादितं अतः कारणात् होतेव होम-कर्तेव त्वमपि प्रियं हविः क्षदसे अश्नासि। पुनः हविः स्वीकारादूर्ध्वं तृप्तस्त्वं जीवन्नहं च नु अवश्यं सं वोचावहै संभूय प्रियवार्तां करवावहै। वोचावहै। लोडर्थे छान्दसे लुङि ब्रुवो वचिः 'अस्यतिवक्ति' इति

च्लेः अङादेशः 'वच उम्' इति उमागमे गुणः। व्यत्ययेन टेः ऐत्वम्। यद्वा। लोट एव लुङादेशः। स्थानिवद्भावात् ऐत्वम्। आमृतम्। 'हृग्रहोर्भः' 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् ॥१७॥

❀ स्क० भा० ❀ क्षिप्रं संवोचावहै आवां हरिश्चन्द्रशुनःशेपौ नौ मुञ्च इति। पुनः संभूतौ। मां मुञ्च इति हरिश्चन्द्रं वा। त्वं च अहं च पुनः संवोचावहै। मां विमुच्य मया संभाषस्व। अहमपि भवन्तं मुच्यमान इति हि तदाशास इत्यर्थः। कस्मात्। मतः मदर्थं येन उपस्तीर्य अभिघार्य च अहं जुहुषितः तदाज्यलक्षणं मधु आहृतं ऋत्विग्भिः। यत आज्यं गृहीत्वा मां स्तोतुमुपस्थिता ऋत्विजः। यथा होता अध्रिगुप्रैषदानेन एवं त्वमपि निर्मोक्षणेन विशससि इष्टं मच्छरीरम्। क्षद हिंसायां विशसने च। त्रलर्थे वा तसिल्। यत्र यज्ञे मदर्थं मधु आहृतं यत्र च होतेव विशससि प्रियं मत्तनुं तत्र क्षिप्रं संवोचोवहै पुनः ॥१७॥

१८

दर्शं नु विश्वदर्शतं दर्शं रथमधि क्षमि।
एता जुषत मे गिरः ॥

❀ ज्योत्स्ना ❀ [ अन्वयः ] विश्वदर्शतं दर्शं नु। क्षमि रथं अधि दर्शम्। एता मे गिरः जुषत।

[ हिन्दी ] *हमारे ऊपर कृपा*—जगत् के लिए दर्शनीय वरुण देवको मैंने देखा। पृथ्वी पर वरुण के रथ को भलोभाँति देखा। इन मेरी स्तुतियों को वरुणनें मानलिया है ॥ १८ ॥

❀ सा० भा० ❀ विश्वदर्शतं सर्वैर्दर्शनीयम् अस्मदनुग्रहार्थमत्राविर्भूतं वरुणं दर्शं नु अहं दृष्टवान् खलु। क्षमि क्षमायां भूमौ रथं वरुणसम्बन्धिनम् अधि दर्शं आधिक्येन दृष्टवानस्मि। एताः उच्यमानाः मे गिरः मदीयाः स्तुतीः जुषत वरुणः सेवितवान् ॥

दर्शम् दृशेः 'इरितो वा' ( पा० सू० ३।१।५७ ) इति च्लेः अङा-

देशः । 'ऋदृशोऽङि गुणः' ( पा० सू० ७।४।१६ ) इति गुणः । विश्वदर्शतम् दृशेः 'भृमृदृशि' ( उ० सू० ३९७ ) इत्यादिना अतच्प्रत्ययान्तो दर्शतशब्दः । मरुद्वृधादित्वात् पूर्वपदान्तोदात्तत्वम् ( पा० सू० ६।२।१०६ ) । यद्वा । विश्वं दर्शनीयमस्येति बहुव्रीहिः । 'बहुव्रीहौ विश्वं संज्ञायाम्' इति पूर्वपदान्तोदात्तत्वम् । क्षमि 'आतो धातोः' ( पा० सू० ६।४।१४० ) इत्यत्र आतः इति योगविभागात् आकारलोपः ॥ १८ ॥

* द० भा० * महता प्रयत्नेन दृष्टवानहं क्षिप्रं सर्वस्य दर्शनीयं द्रष्टारं वा वरुणं तद्रथमपि दर्शं पृथिव्या उपरि दिवि यत्रायमारूढः । यत एवं अतो ब्रवीमि एताः सेवतां मम स्तुतीः ॥ १८ ॥

१९.

इमं मे वरुण श्रुधी हवमद्या च मृडय ।

त्वामवस्युरा चके ॥

* ज्योत्स्ना * [ अन्वयः ] हे वरुण ! मे इमं हवं श्रुधि । च अद्य मृडय । अवस्युः त्वां आ चके ।

[ हिन्दी ] *प्रार्थना*—हे वरुणदेव ! मेरे इस बुलाने को सुनिए, और आज हमें सुखी बनाइए । रक्षा चाहता हुआ मैं आपकी स्तुति करता हूँ ॥ १९ ॥

* सा० भा० * वरुणप्रघासेषु 'इमं मे वरुण' इति वारुणस्य हविषः अनुवाक्या 'पञ्चम्यां पौर्णमास्याम्' इति खण्डे सूत्रितम् 'इमं मे वरुण श्रुधि, तत्वा यामि ब्रह्मणा वन्दमानः' ( आश्व० श्रौ०२।१७ ) इति ।

हे वरुण ! मे मदीयम् इमं हवम् आह्वानं श्रुधि शृणु । किं च अद्य अस्मिन् दिने मृडय अस्मान् सुखय । अवस्युः रक्षणेच्छुः अहं त्वां वरुणम् (आ) आभिमुख्येन चके शब्दयामि स्तौमीत्यर्थः ।

श्रुधि । 'श्रु श्रवणे' । लोटो हिः । 'श्रुशृणुपृकृवृभ्यश्छन्दसि' इति हेर्धिरादेशः । 'बहुलं छन्दसि' इति विकरणस्य लुक् । 'अन्येषमपि दृश्यते' इति संहितायां दीर्घः । अवस्युः अवस् शब्दात् 'सुप आत्मनः-

क्यच्' 'क्याच्छन्दसि' इति उप्रत्ययः । आ चके । 'कै गै शब्दे' अस्मात् लिटि 'आदेच' (पा० सू० ६।१।४५) इति आत्वम् । द्विर्भावश्चुत्वे । 'आतो लोप इटि च' (पा० सू० ६।४।६४) इति आकारलोपः । 'तिङ्ङतिङः' इति निघातः ॥ १६ ॥

* स्क० भा० * मम हे वरुण शृणु आह्वानमिदम् । श्रुत्वा अद्य च अत ऊर्ध्वं च सुखय । आत्मपालनतर्पणकामः अहं त्वां आयाचे । चक कान्तौ । त्वं पालय । तर्पय च इति कामये ॥ १६ ॥

२०

**त्वं विश्वस्य मेधिर दिवश्च ग्मश्च राजसि ।**
**स यामनि प्रति श्रुधि ॥**

* ज्योत्स्ना * [ अन्वयः ] हे मेधिर ! त्वं दिवः च ग्मः च विश्वस्य ( मध्ये ) राजसि । स यामनि प्रति श्रुधि ।

[ हिन्दी ] *आदेश की प्रार्थना*—हे बुद्धिमान् वरुणदेव ! आप द्युलोक और पृथ्वीलोक, सम्पूर्ण जगत् के भीतर चमक रहे हैं । वे आप हमारे कल्याणकारी कार्य के लिए आज्ञा कीजिए ॥२०॥

* सा०भा० * हे **मेधिर** ! मेधाविन् वरुण **त्वं दिवश्च** द्युलोकस्यापि **ग्मश्च** भूलोकस्यापि एवमात्मकस्य **विश्वस्य** सर्वस्य जगतो मध्ये **राजसि** दीप्यसे । **सः** तादृशः त्वं **यामनि** क्षेमप्रापणे अस्मदीये **प्रति श्रुधि** प्रतिश्रवणम् आज्ञापनं कुरु । रक्षिष्यामि इति प्रत्युत्तरं देहीत्यर्थः ।

दिवः 'ऊडिदम्' इत्यादिना षष्ठ्या उदात्तत्वम् । ग्मः 'ग्माः ग्मा' (नि० १।१।२) इत्येतत् भूनामसु पठितम् । 'आतो धातोः' इत्यत्र आतः इति योगविभागात् 'आतो लोपः' इति । प्रतिषेधेऽपि व्यत्ययेन आकारलोपः । उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम् । **यामनि** 'या प्रापणे' । 'आतो मनिन्क्वनिब्वनिपश्च' इति मनिन् । नित्वादाद्युदात्तत्वम् । **श्रुधि** उक्तम् ॥ २० ॥

* स्क० भा० * त्वं हे मेधिर 'मेधसाधिर्हव्यज्जुष्टिः' इति यज्ञे । मतुपि

नः । हे यज्ञवन् । यस्त्वं सर्वस्य अर्थनीयस्य दिवश्च पृथिव्याश्च । राजसि ईशिसे । 'गमावनिर्गो रसा व्रजा' इति श्रुवि । सः यामनि मरण-काले मृत्युं प्रतिगम्यते यस्मिन् सः कालः यामा तत्र । मदमरणं प्रतिजानीहि त्वां मुनामि इति प्रतिज्ञां कुरु । न त्वं म्रियसे ॥ २० ॥

२१

उदुत्तमं मुमुग्धि नो वि पाशं मध्यमं चृत ।
अवाधमानि जीवसे ॥

❀ ज्योत्स्ना ❀ [ अन्वयः ] नः उत्तमं पाशं उत् मुमुग्धि, मध्यमं वि चृत । जीवसे अधमानि अव 'चृत' ।

[ हिन्दी ] *बन्धन हटाने की प्रार्थना*—हमारे शरीर के ऊर्ध्व-भाग शिर के पाशों को खींचकर खोल दो । पेट में पड़े मध्यम पाश को अलग करके तोड़ दो । हमारे जीवन के लिए नीचे के पैर के पाश को निकाल कर नष्ट कर दो ॥ २१ ॥

❀ सा० भा० ❀ नः अस्माकम् उत्तमं शिरोगतं पाशम् उत् मुमुग्धि उत्कृष्य मोचय । मध्यमम् उदरगतं पाशं वि चृत वियुज्य नाशय । जीवसे जीवितुम् अधमानि मदीयान् पादगतान् पाशान् अव-चृत अवकृष्य नाशय ।

उत्तमम् उत्कादिषु पाठादन्तोदात्तत्वम् । मुमुग्धि मुच्लृ मोक्षणे । 'बहुलं छन्दसि' इति विकरणस्य श्लुः । द्विर्भावः । 'हलादिः शेषः । 'हुझल्भ्यो हेर्धिः' ( पा० सू० ६।४।१०१ ) इति हेर्धिरादेशः । 'तिङ्ङ-तिङः' इति निघातः । चृत 'चृती हिंसाग्रन्थनयोः' । लोटो हिः । 'तुदा-दिभ्यः शः' । 'अतो हेः' इति हेर्लुक् । जीवसे 'जीव प्राणधारणे' । 'तुमर्थे सेसेन्' इति असे प्रत्ययः । प्रत्ययस्वरः ॥ २१ ॥

❀ स्क० भा० ❀ उत्तमं पाशं ऊर्ध्वं मुमुग्धि । मध्यमं पाशं तत्रैवाव-स्थितं विश्लथय । चृति हिंसाग्रन्थनयोः । अधमानि अवचृत अधोमुखं मुञ्च जीवनाय ॥ २१ ॥ [ इति वरुणसूक्ते चतुर्थः ( १९ ) वर्गः ]

सूक्तसार

* ज्योत्स्ना * ऋषि शुनःशेप के इस वरुणसूक्तमें वरुण देवता के लिए कहा गया है कि वह कर्तव्यनिष्ठ, उदार, दर्शनीय, गुणवान्, बुद्धिमान्, अन्तरिक्षमें पक्षियों की गति, समुद्रमें नावों की गति, तथा वायुके सभी मार्गों को पहिचानने वाला, कालकी गति ( महिना आदि ) और उसकी वृद्धि ( अधिकमास ) को भली भाँति जाननेवाला, पुष्ट शरीर सुवर्ण के समान गौरवर्ण, कवचधारी बलप्रेमी बहुदर्शी प्रभावशाली बन्धन हटाने वाला नेता है। इसकी आराधना से भूत भविष्य वर्तमान की अद्भुत जानकारी होती है। वरुणदेव के स्तुतिरूप इस सूक्त से निम्न बातों पर विशेष ध्यान आकृष्ट होता है–सर्वदा सुमार्ग (सत्कर्तव्य) पर चलना, प्रेम और आदर के बुलाने पर जाना, अपने उचित भाग को लेना, स्वाभाविक असावधानी को समझना और उसे हटाना, बहुत जानकारी रखते हुए और उसमें लाभ समझते हुए भी अपने उचित लक्ष्य के लिए सदा सावधान रहना, दीर्घ जीवन की अभिलाषा रखना आदि। इस सूक्त से साम्राज्य रक्षा के लिए भी उपदेश ग्रहण करना चाहिए। उनमें—प्रजाओं में कर्तव्यनिष्ठा का प्रचार, अपनी असावधानी को स्वयं समझना, उसके ऊपर पश्चात्ताप, गुणी के गुणों के प्रशंसा, गुणग्राहिता, प्रेम, दीर्घदर्शिता, अपने अधिकृत प्रदेश के जल-स्थल-आकाशमार्ग की रत्ती रत्ती की जानकारी, पेट भर सबको अन्न देने की व्यवस्था प्रमुख तथा आदर्श हैं, जिनको अपनाना चाहिए।

*वारुणं सूक्तरत्नं सद्, वेद–रत्नाकरोद्धृतम्।*
*मिश्र–गोपालचन्द्रस्य ज्योत्स्नया राजतां हृदि॥*

॥ इति वरुणसूक्तं समाप्तम् ॥

ज्योत्स्नाविवृति-सायणभाष्य-स्कन्दस्वामिभाष्येति-
त्रितयसहितम्—

# उष:सूक्तम्

[ ऋग्वेदीयं १ मण्डलान्तर्गतं ११३ तमं सूक्तम् ]



वैदिकसार्वभौम—महायाज्ञिक-पं० श्रीभगवत्प्रसादमिश्रवेदाचार्य-
( प्रोफेसर गवर्नमेन्ट संस्कृत कालेज बनारस )
महोदयानां निर्देशेन सम्पादितम्।

# उषःसूक्तम्

[ ऋग्वेदे १ मं० ११३ सू० ]

❀ ज्योत्स्ना ❀

*उषस्यं सूक्तरत्नं श्रीगुर्वर्क-ज्ञानभा-वतः ।*
*मिश्र-गोपालचन्द्रस्य ज्योत्स्नया संविभूष्यते ॥*

*सूक्तपरिचयः*

**ऋग्वेदे उषस्यानि सन्ति बहूनि सूक्तानि । तत्रेदं [ १।११३ ] प्रथममण्डलान्तर्गतं त्रयोदशाधिकशततमं सूक्तम् । अष्टकनिर्देशक्रमेण [ १।८।१-४ ] प्रथमाष्टके अष्टमाध्याये आद्याश्चत्वारो वर्गाः । सर्वेऽप्यमी वर्गाः पञ्चर्चाः । अनुवाकनिर्देशक्रमेण [ १।१६।८ ] प्रथमे मण्डले षोडशेऽनुवाके अष्टमं सूक्तम् । अत्र सूक्ते विंशति ऋचः ।**

*ऋषिपरिचयः*

**सूक्तस्यास्य आङ्गिरसः कुत्स ऋषिः । एतेनर्षिणा दृष्टानि दश सूक्तानि चतुर्दश ऋचश्च ऋग्वेदे समुपलभ्यन्ते । तत्र सूक्तानि तु सर्वाणि प्रथममण्डले, चतुर्दशर्चश्च नवममण्डले सन्ति । सङ्कलनया षड्विंशत्युत्तरं द्विशतं ( २२६ ) मन्त्रा कुत्सदृष्टा भवन्ति । 'कुत्स' इतीदं वज्रस्यापि नाम भवति, तत्र कृत्यतेऽनेनेति कृन्ततेः कुत्सशब्दः । ऋषिवाचित्वे तु स्तुतीनां कर्तेत्यर्थे करोतेर्निष्पाद्यमित्यौपमन्यव आचार्यो मनुते । तथा च निरुक्तम् (३।११) 'तत्र ( वज्रनामसु ) कुत्स इत्येतत् कृन्ततेः । ऋषिः कुत्सो भवति । कर्ता स्तोमानामित्यौपमन्यवः' इति ।**

इतिवृत्तम्—कुत्स इति कश्चनाङ्गिरोगोत्रो राजर्षिरभवत्। एतस्य पिता 'रुरु' नामकः कश्चिद्राजर्षिः, माता च नाम्ना 'अर्जुनी' इत्यासीत्। सोऽयं तपस्वी कुत्सः कदाचिच्छत्रुभिः सह युयुत्सुः संग्रामे स्वयमशक्तः सञ्छत्रूणां हननार्थमिन्द्रस्याह्वानं चकार। स चेन्द्रः कुत्सस्य गृहमागत्य तस्य शत्रूञ्जघान। तदनन्तरमतिप्रीत्यानयोः सख्यमभवत्। सखित्वसमनन्तरमिन्द्र एनं स्वकीयं गृहं निनाय। इन्द्रस्य कुत्सस्य च सरूपत्वमासीदिति तत्रेन्द्रस्वागतार्थमागतेन्द्रपत्नी शचीदेवी तयोः सरूपत्वेन समशेत कः कुत्सः? कश्चेन्द्र? इति। एवं सरूपयोरनयोः कुत्सेन्द्रयोरासीत्प्रगाढं सख्यम्। एकदा हि कुत्सः 'लुश' नामकश्च कश्चनर्षिः समान एव काले यज्ञं प्रारेभाते। तत्रोभयत्रापि कुत्सलुशाभ्यामाहूत इन्द्रः सखित्वात् कुत्सस्य यज्ञे पूर्वमियाय। तत्र च कुत्सेनेन्द्रो गमनशङ्कया बह्वीभिश्चर्मरज्जुभिराबद्धः। अथ लुश ऋषिरवगत्य कुत्सकृत्यं तुष्टावेन्द्रं, व्यजिज्ञपच्च स्वीयबन्धनान्यवचृत्य यज्ञे समागमनाय। इन्द्रोऽपि लुशस्य वचः समाकर्ण्य बन्धनं सञ्छिद्य लुशस्य देवयजनमुपाजगाम। अथ कुत्स इन्द्रं गतमवलोक्य पुनस्तुष्टाव। समुपेयाय चेन्द्रः पुनरपि सखित्वात्कुत्सकृतं कृत्यमविचारयन्नेव। सखित्वादेव चेन्द्रः कुत्सस्य शुष्ण-कुयवनामानौ बलवन्तौ विद्विषौ जघान। कुत्सोऽयं सर्वेषु मित्रभावं व्यवहरन्नपि इन्द्रवचसा दीर्घजिह्वीं नाम राक्षसीमवधीत्। एषा हि दीर्घजिह्वी राक्षसी सर्वानपि यज्ञसाधनान्यवलेहनेन भ्रंशयन्त्यचरत्। तामिन्द्रः कयापि मायया हन्तुं नाशक्नोत्। अथ स्वमित्रं कुत्समब्रवीत्, स चैनां जघानेति।

*छन्दः परिचयः*

एतस्य उषःसूक्तस्य त्रिष्टुप्छन्दः। त्रिष्टुप्छन्दसो लक्षण

द्वितीये वैष्णवे सूक्ते (पृ० ४) उक्तम् 'यत्र एकादशाक्षराश्चत्वारोऽपि पादास्तत्र त्रिष्टुप्छन्द' इति। एवं विराट्स्थानात्रिष्टुल्लक्षणमपि-'यत्र नवाक्षरो दशाक्षरो वा एकः एकाधिका वा पादाः स्युः शेषाश्चैकादशाक्षरास्तत्र तद्' ति पूर्वमुक्तम्। तत्र प्रथम-मन्त्रस्य चतुर्थे पादे 'रात्री उषसे' द्वितीयस्य प्रथमे 'श्वेत्या आगात्, द्वितीये 'सदनानि अस्याः' इति सन्धिच्छेदात्मको व्यूहः। तृतीयस्य पंचमस्य चाद्ये दशाक्षरत्वात् चतुर्थाद्यस्य च नवाक्षरत्वात्तत्र विराट्स्थाना त्रिष्टुप्। चतुर्थस्य तृतीये 'जगद् वि उ' इति च्छेदः। सप्तमस्य द्वितीये दश ततो विराट्स्थाना, 'अद्य इह' इति चतुर्थे व्यूहः। अष्टमस्य प्रथमे 'अनु एति' उत्तरार्द्धे 'उदीरयन्ती उषा' व्यूहः। तृतीये दश ततो विराट्स्थाना। नवमस्य द्वितीये 'सूरियस्य' दशमस्य प्रथमे 'कियति आ', एकादशस्य तृतीये 'चदया अभूत्', द्वादशस्य तुरीये 'इह अद्य' त्रयोदशस्याद्ये 'पुरा उषाः, देवी अथो' द्वितीये 'अद्य इदं' तृतीये 'वि उच्छान्' इति व्यूहः। दशमैकादशयोर्द्वितीयपादयोर्नवाक्षरत्वात् त्रिराट्स्थानात्वम्। चतुर्दशस्य चतुर्षु 'वि अञ्जिभिः, आताउ अद्यौत्, देवी आवः, यन्ती अरुणेभिः, 'आ उषा' इति सन्धिव्यूहः। पञ्चदशस्य प्रथमे नव ततो विराटस्थाना। षोडशस्य प्रथमे 'आ अगात्' सप्तदशस्य उत्तरार्धे 'मघोनि अस्मिन्' इति व्यूहः। अष्टादशस्य द्वितीये नव इति विराट्स्थाना। ऊनविंशस्य उत्तरार्धे 'वि उच्छ आ' विंशस्य पूर्वार्धे 'वहन्ती ईजानाय' इति व्यूहः, इति।

## देवतापरिचयः

अस्य समस्तस्य सूक्तस्य उषाः देवता। प्रथमायाः ऋच उत्तरार्धस्य तु रात्रिरपि देवता।

उषोदेवतापरिचयः—उषा हीयं मध्यमस्थानीया द्युस्थानीया च

देवता इति ( निरु० ११।४६;१२।५ ) नैरुक्ताः। मध्यस्थानीया हि माध्यमिकी वाक् उषाः–उदकानि उच्छति विवासयति, उच्छ्यते विवास्यते वा मेघादित्यर्थे 'उच्छी विवासे'(भ्वा० प०) इति धातोरसुनि पृषोदरादित्वाच्छस्य षत्वे निष्पाद्यते। द्युस्थानीयायास्तु उच्छतेः, 'वश कान्तौ'(अ० प०)इत्यस्माद्वा कसुन्प्रत्यये, संप्रसारणे शस्य व्यत्ययेन षत्वे निष्पत्तिः। तथा च निरुक्तम् 'उषा वष्टेः कान्तिकर्मणः उच्छतेरितरा माध्यमिका' (निरु० १२।५) इति। लौकिकाभिधानकृतः अमरादयस्तु 'उषा रात्रेरवसाने' ( अ० को० ३।४।१८ ) इत्यत्रावन्तं पदं पठन्ति। टीकाकृतश्च 'उष दाहे' (भ्वा० प० ) इत्यस्मादौणादिकं काप्रत्ययमुपदिशन्ति । 'प्रत्यूषोऽहर्मुखं कल्यमुषः प्रत्युषसी अपि' ( अ० को० १।४।२ ) इत्यत्र च 'ओषत्यन्धकार' मित्युक्त्वा 'उष् दाहे' इत्यस्मादेव 'उषः किच्च' ( उ० ६८३ ) इत्यसिप्रत्ययेन सान्तशब्दं व्युत्पादयन्ति। तस्यैतस्या उषसो 'अरुण्यो गाव उषसः' (निघ० १।१५) इत्यनेन अरुण्यो गावो वाहनत्वेन दृश्यन्ते। एतस्याश्च कालः सूर्योदयात्प्रागेव भवति। ऊर्ध्वमर्धरात्रात्सूर्योदयपर्यन्तः कालः अश्विनोर्भवतीति तत्रैवेयमुषाः संस्तूयते। तदेतस्या उषसः–'उषाः, सूर्या, वृषाकपायी, सरण्यू' इति नामचतुष्टयं रूपभेदेन कालभेदेन च भवति । तत्र रात्रेरपरकालः सूर्योदयात्प्रागुषसः काल इति साधारण्येन कथ्यते। महत्यस्मिन्नुषसि कालेऽवान्तर 'उषसः' कालस्तदा भवति यदान्तरिक्षलोकस्य पूर्वार्धे भानोः प्रकाशेन संसर्गो भवति। अथ यदा अन्तरिक्षे सूर्योदयकालः सन्निहितो भवतीति सैवोषाः 'सूर्यें'त्युच्यते। यदा चान्तरिक्षलोकस्य अवश्यायसंघातान् सूर्यरश्मयोऽशितुं (शोषयितुं) प्रवर्तन्त इति तदा 'वृषाकपायी' उच्यते। यदा च मर्त्यानामायतने पृथिव्यां सूर्यरश्मिसंबन्धात् श्वेता भासो दृश्यन्ते तदा 'सरण्यू' रित्युच्यते।

तत उषसो महान् कालः समाप्तिमेतीत्युषसः परिचयः। निघण्टौ षोडशोषसो नामानि पठ्यन्ते। तानि च—'विभावरी सूनरी। भास्वती। ओदती। चित्रामघा। अर्जुनी। वाजिनी। वाजिनीवती। सुम्नावरी। अहना। द्योतना। श्वेत्या। अरुषी। सूनृता। सूनृतावती। सूनृतावरी।' इति—[ निघं० १।८ ]

रात्रिदेवतापरिचयः—सूक्तेऽस्मिन् द्वितीयेऽर्धर्चे 'यथा प्रसूता सवितुः सवाय एवा रात्र्युषसे योनिमारैक्' इत्यत्र रात्रिरपि देवता। रात्र्याः स्थानप्रदातृत्वेन तस्या अपि प्राधान्यात्। देवता चेयं रात्रिः पृथ्वीस्थाना निरुक्ते ( ९।२८ ) पठ्यते। रात्रिशब्दोऽयं प्ररमयति भूतानि नक्तञ्चारीणि, उपरमयति निश्चलीकरोति दिवाचराणि भूतानि स्वस्वव्यापारेभ्य इत्यर्थे प्रोपयोरन्यतरोपसर्गविशिष्टार्थकादन्तर्णीतण्यर्थात् 'रमु क्रीडायाम्'(भ्वा० आ०) धातोर्बाहुलकात्, प्रदीयन्तेऽस्यामवश्यायास्तुहिनानीत्यर्थे च 'रा दाने' ( अ० प० ) धातोरुपदेशादेव 'राशदिभ्यां त्रिप्' ( उ० ५।१६ ) इति त्रिप् प्रत्यये रमतेः पक्षे मकारस्याकारे निष्पाद्यते। 'कृदिकारादक्तिनः' ( पा० ४।१।४५ ग० ) इत्यनेन ङीषि कृते तु 'रात्री' इति दीर्घान्तोऽपि रात्रिशब्दः संभवति। रात्रेर्निघण्टौ त्रयोविंशति नामानि पठ्यन्ते यथा—श्यावी। क्षपा। शर्वरी। अक्तुः। ऊर्म्या। राम्या। यम्या। नम्या। दोषा। नक्ता। तमः। रजः। असिक्नी। पयस्वती। तमस्वती। घृताची। शिरिणा। मोकी। शोकी। ऊधः। पयः। हिमा। वस्वी।' इति—[ निघं० १।७ ]।

*विनियोगपरिचयः*

सूक्तविनियोगः—१ [ उषस्ये क्रतौ ] अस्ति अग्निष्टोम इत्याख्यो यज्ञः। तत्र प्रधानयागदिने सूर्योदयात् पूर्वं, पक्षिणां वाचोवदन-

वेलायाः प्रागेव ब्राह्मे मुहूर्ते उषःकाले प्रातरनुवाकः शस्त्रं पठ्यते। प्रातःकाले ऋचामनूच्यमानत्वात् 'प्रातरनुवाक' इति तत्र शब्दव्यवहारः। तत्र प्रातरनुवाके अग्नेरुषसः अश्विनोः इति त्रयाणां देवानां गायत्र्यादिसप्तछन्दस्का ऋचः पठ्यन्ते। सप्तच्छन्दसां निर्दिष्टो मन्त्रसमुदायस्तत्तद्देवताकः 'क्रतु' रिति उच्यते। ततश्च उषोदेवताके अध्येतव्ये सप्तछन्दःसमुदायात्मके मन्त्रराशौ त्रिष्टुप्छन्दस्कमन्त्रनिर्देशे 'इदं श्रेष्ठं' इति सूक्तं विहितम्। एवं चेदं सूक्तं प्रातरनुवाकाध्येतव्यमन्त्रेषु उषोदेवताकसर्वछन्दस्कमन्त्रराश्यात्मके उषस्ये क्रतौ त्रिष्टुप्छन्दस्कमन्त्रेषु प्रयोक्तव्यमिति।

२ [ आश्विनशस्त्रे ] ज्योतिष्टोमस्य अग्निष्टोमात्यग्निष्टोमषोडश्यतिरात्राप्तोर्यामवाजपेयाख्याः सप्तसंस्था भवन्तीति वैष्णवसूक्ते ('१' पृ० ५) उक्तम्। तत्र अतिरात्रसंस्थे ज्योतिष्टोमे पंचविंशतिशस्त्राणि पठ्यन्ते। तत्रैकमाश्विनशस्त्रमित्यतिप्रसिद्धं शस्त्रमस्ति। तत्र ऋचां सहस्रमवश्यं वक्तव्यमित्याश्वलायनीयानां कल्पः। तत्र ऋचां सहस्रे 'इदं श्रेष्ठ' मित्युषस्यं सूक्तमपि प्रयोक्तव्यं, प्रातरनुवाके एतत्सूक्तस्याधीयमानत्वात्। यद्धि प्रातरनुवाके शंसनीयत्वेनोपदिष्टं तदाश्विने शस्त्रेऽपि प्रयोक्तव्यमिति श्रौतसूत्रे विधानात्। तथाहि—'प्रातरनुवाकन्यायेन तस्यैव समाम्नायस्य सहस्रावममोदेतोः शंसेत्'(आश्व० श्रौ० ६।५)इति।

मन्त्रविनियोगः—पंचदशतममन्त्रविनियोगः। अस्ति सचयनसोमयागः। तत्र देवीनां हविरिति कर्म भवति। देवतानां च बहुत्वात् हविषो नानात्वाच्च 'देवीनां हविष' इति बहुवचनव्यवहारः। तत्राश्वलायनानां मते देवीनां हविःषु पंच देवताः। शाखान्तरे च दश देवताः। उषा देवता तु उभयत्रापि वर्तते। तत्र

उषोदेवतायै हूयमाने हविषि 'आवहन्ती'ति मन्त्रस्य प्रयोगो याज्यात्वेन कर्तव्य इति ॥

*मन्त्रव्याख्यानम्—*

१

इदं श्रेष्ठं ज्योतिषां ज्योतिरागाच्चित्रः प्रकेतो अजनिष्ट विभ्वा।
यथा प्रसूता सवितुः सवायँ एवा रात्र्युषसे योनिमारैक् ॥

❀ ज्योत्स्ना ❀ [ अन्वयः ] ज्योतिषां इदं ज्योतिः श्रेष्ठम् आ अगात् । चित्रः प्रकेतः विभ्वा अजनिष्ट । यथा रात्री सवितुः प्रसूता एव 'रात्री' उषसे सवाय योनिम् आरैक् ।

[ हिन्दी ] उषः कालका श्रेष्ठप्रकाश और रात्रिसे प्रादुर्भाव—ग्रह-नक्षत्र-चन्द्र आदि ज्योतिर्मय विभूतियों में से यह उषः काल की ज्योति श्रेष्ठ आगई है। इसके आनेपर प्रशंसनीय प्रकाशक सूर्य व्यापक होकर प्रकट हुआ है। जैसे रात्री सूर्य से ( स्थान छोड़ने पर ) उत्पन्न हुई है, इसी प्रकार रात्री नें उषः काल के प्रादुर्भाव के लिए अपने अन्तिम भाग रूप स्थान को छोड़ दिया है ॥ १ ॥

❀ सायणभाष्यम् ❀

इत्थं सप्तममध्यायं व्याख्याय अष्टमोऽध्यायो व्याख्यातुमारभ्यते। प्रथमे मण्डले षोडशेऽनुवाके सप्त सूक्तानि गतानि। 'इदं' इति विंशत्यृचमष्टमं सूक्तम्। अत्रानुक्रम्यते—'इदं विंशतिरुषस्यं द्वितीयोऽर्धर्चो रात्रेश्च' इति। 'ऋषिश्चान्यस्मात्' ( अनु० १२।२ ) इति परिभाषया अनुवृत्तेः आङ्गिरसः कुत्स ऋषिः। अनादेशपरिभाषया[1] त्रिष्टुप्छन्दः।

---

१ 'अनादेशे त्विन्द्रो देवता। त्रिष्टुप् छन्दः। ( अनु० १२।५-६ ) इत्यनादेशपरिभाषा। अनादेशो नाम प्रकरणे स्पष्टतया अकथनम्।

उषा देवता, द्वितीयस्यार्धर्चस्य रात्रिरपि। (१) प्रातरनुवाके उषस्ये क्रतौ त्रैष्टुभे छन्दसि एतत्सूक्तम्। सूत्रितं च—'इदं श्रेष्ठं पृथू रथ इति सूक्ते' (आश्व० श्रौ० ४।१४) इति। (२) आश्विनशस्त्रे चेदं सूक्तं प्रातरनुवाकातिदेशात्[1]।

ज्योतिषां ग्रहनक्षत्रादीनां द्योतमानानां मध्ये **इदम्** उषआख्यं **ज्योतिः श्रेष्ठं** प्रशस्यतमम्। अस्य कोऽतिशय इति चेत् उच्यते। नक्षत्रादिकं ज्योतिः स्वात्मानमेव प्रकाशयति नान्यत्। चन्द्रस्तु यद्यप्यन्यत् प्रकाशयति तथापि न विस्पष्टप्रकाशः। औषसं तु ज्योतिः युगपदेव सर्वस्य जगतः अन्धकारनिराकरणेन विशेषेण प्रकाशकम्। अतः प्रशस्यतममित्यर्थः। तादृशं ज्योतिः, **आगात्** पूर्वस्यां दिश्यागमत्। आगते च तस्मिन् **चित्रः** चायनीयः **प्रकेतः** अन्धकारावृतस्य सर्वस्य पदार्थस्य प्रज्ञापकः तदीयो रश्मिः **विभ्वा** विभुर्व्याप्तः सन् **अजनिष्ट** प्रादुरभूत्। किंच **यथा रात्री** रात्रिः स्वयं **सवितुः** सूर्यसकाशात् **प्रसूता** उत्पन्ना। सूर्यो हि अस्तं गच्छन् रात्रिं जनयति। तस्मिन्ननस्तमिते रात्रेरुत्पत्त्यभावात्। **एवमेव रात्रिरपि उषसे सवाय** उषस उत्पत्तये तदर्थं **योनिं** स्थानं स्वकीयापरभागलक्षणम् (आ) **अरैक्** आरेचितवती कल्पितवतीत्यर्थः। यद्वा—प्रसूता रात्रिसकाशात् उत्पन्नोषाः सवितुः सूर्यस्य सवाय प्रसवाय जन्मने यथा भवति एवं रात्रिरपि उषसे उषसो यज्जन्म तदर्थं योनिं स्वापरभागलक्षणं स्थानं कृतवती। अत्र निरुक्तम् 'इदं श्रेष्ठं ज्योतिषां ज्योतिरागमत्। चित्रं प्रकेतनं प्रज्ञाततममजनिष्ट विभूततमं, यथा प्रसूता सवितुः प्रसवाय रात्रिरादित्यस्यैवं रात्र्युषसे योनिमरिचत स्थानम्।' (निरु० २।१६) इति।

**श्रेष्ठम्** प्रशस्यशब्दात् आतिशायनिकः इष्ठन् 'प्रशस्यस्य श्रः' (पा० ५।३।६०) इति आदेशः। 'प्रकृत्यैकाच्' (पा० ६।४।१६३) इति

---

१ अतिदेशो नाम एकत्रोपदिष्टायाः क्रियायाः (धर्मसन्ततेः) वचनात् प्रमाणान्तराद्वान्यत्र प्राप्तिः।

प्रकृतिभावात् टिलोपाभावः । अगात् एतेर्लुङि 'इणो गा लुङि' इति गादेशः । 'गातिस्था' इति सिचो लुक् । प्रकेतः कित ज्ञाने । अन्तर्भावितण्यर्थात् कर्मणि घञ् । थाथादिना उत्तरपदान्तोदात्तत्वम् । अजनिष्ट 'जनी प्रादुर्भावे' । लुङि सिच इडागमः । विभ्वा 'विप्रसंभ्यो ड्वसंज्ञायाम्' इति भवतेः डुप्रत्ययः । 'सुपां सुलुक्' इत्यादिना सोः आकारादेशः 'ओः सुपि' इति यणादेशस्य 'न भूसुधियोः' इति प्रतिषेधे प्राप्ते 'छन्दस्युभयथा' इति यणादेशः । व्यत्ययेनाद्युदात्तत्वम् । यद्वा विपूर्वात् भवतेः औणादिको डुन् प्रत्ययः नित्वादाद्युदात्तत्वम् । प्रसूता 'षूङ् प्राणिप्रसवे' कर्मणि निष्ठा 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । सवाय 'छन्दसि जवसवौ वक्तव्यौ' ( पा० ३।३।५६ वा० ) इति निपातनात् अच् । चित्वादन्तोदात्तत्वम् 'अणोऽप्रगृह्यस्यानुनासिकः' इति संहितायाम् अकारः सानुनासिकः । एव 'निपातस्य च' इति संहितायां दीर्घः । रात्री रात्रेश्चाजसौ' इति ङीप् । 'यस्येति च' इति इकारलोपः । अरैक् 'रिचिर् विरेचने' लङि 'बहुलं छन्दसि' इति विकरणस्य लुक् । लघूपधगुणे 'हल्ङ्याभ्य.' इति तिलोपः । वर्णव्यापत्त्या व्यत्ययेन एकारस्य ऐकारः ॥ १ ॥

## ❀ स्कन्दस्वामिभाष्यम् ❀

उषोदेवत्यमेतत् सूक्तम्, 'सम्यक् पृथक् चास्त्युषस्येषु रात्रेः' उषस्येषु सूक्तेषु सम्यक् सह पृथक् चास्ति रात्रेः स्तुतिः । इदं श्रेष्ठं इति श्रेष्ठशब्दः प्रशस्यवचनः । ज्योतिषामिति निर्धारणे षष्ठी । इदमादित्यादीनां ज्योतिषां मध्ये प्रशस्यतममुषआख्यं ज्योतिरागात् । आ इत्येष उदित्येतस्य स्थाने । उद्गता । इयमुषा उदितेत्यर्थः । उदितायां च तस्यां चित्रः । व्यत्ययेनात्र पुंल्लिङ्गता । चित्रं पूज्यं वा । केत इति प्रज्ञानाम । प्रकृष्टज्ञानं प्रकाशाख्यं अजनिष्ट जातम् । विभ्वा प्रथमार्थे तृतीया । विभुः सर्वव्यापीत्यर्थः । किंच यथा प्रसूता उत्पन्ना स्वयं रात्रिः सवितुरादित्यस्य सकाशात् । आदित्यो हि रात्रिमस्तमयेन जनयति । तेन रात्रिरादित्यादुत्पद्यते । अत इदंमुच्यते

यथा स्वयं प्रसूता रात्रिः सवितुः सकाशादिति । सवायँ एवा रात्र्युषसे । उषसे इति षष्ठ्यर्थे चतुर्थी । सवायेत्येतेन चास्य संबन्धः । उषसो जन्मने एवा एवं रात्री योनिं स्थानमात्मैकदेशं अपररात्रलक्षणम् । आरैक् रेचितवती । प्रकल्पितवतीत्यर्थः । यथा रात्रिरादित्यास्तमयादनन्तरं स्वयं उत्पन्ना, एवं तदनन्तरमुषा जनिष्यति इत्येवमुषसः स्थानं प्रकल्पितवतीत्यखिलार्थः । अथवा यथा प्रसूतेति उषा उच्यते न रात्रिः । सवितुरित्यपि सवायेत्येतेन संबध्यते । उषस इत्यपि तादर्थ्ये चतुर्थी । यथा प्रसूता उत्पन्ना सवितुः सवाय जन्मने । आत्मनोऽनन्तरमुषा ह्यादित्यं जनयति । अतस्तदर्थैवास्या उत्पत्तिरिति व्यपदिश्यते । एवं रात्रिरुषसे उषसोऽर्थम् । उषसो जन्मार्थमित्यर्थः । योनिं आरैक् स्थानं प्रकल्पितवती । न ह्यप्रकल्पिते रात्र्याः स्थाने उषसो जन्म संभवति । एवमियं रात्रेः स्तुतिः । उषसो वा । रात्रिरस्याः स्थानं प्रकल्पितवती ॥ १ ॥

२

रुशद्वत्सा रुशती श्वेत्यागादारैगु कृष्णा सदनान्यस्याः।
समानबन्धू अमृते अनूची द्यावा वर्णं चरत आमिनाने ॥

❀ ज्योत्स्ना ❀ [अन्वयः] रुशती श्वेत्या रुशद्वत्सा आ अगात् । अस्याः कृष्णा सदनानि आरैक् उ समानबन्धू अमृते अनूची वर्णं आमिनाने द्यावा चरतः ।

[ हिन्दी ] *उषाकी गति*—दीप्तिमती श्वेतवर्णा की सूर्यरूप वत्सवाली उषा आगई है। आतीहुई इस उषा को कृष्णवर्णा रात्रीनें अपना अन्तिमप्रहररूप स्थान देदिया है। इस भांति सूर्यरूप समान बन्धनवाली, कालात्मक होने के कारण मृत्यु रहित, परस्पर एक दूसरेके पीछे जानेवाली, सब प्राणियोंके रूपको गलाती हुई रात्रि और उषा प्रकाशित होकर (या अन्तरिक्षलोक में) चल रही हैं [ यहाँ—उषा के पीछे सर्वदा सूर्योदय

होने का कारण, या 'ओस' 'कोहरा' (नीहार) रूप दुग्धस्थानीय रसकोखींचने के कारण सूर्य उषा का 'वत्स' बताया गया है]॥२॥

❀ सा० भा० ❀ श्वेत्या इत्युषसो नामधेयम् । रुशती दीप्ता श्वेत्या श्वेतवर्णोषाः । **रुशद्वत्सा** रुशन् दीप्तः सूर्यो वत्सो यस्याः सा तथोक्ता। यथा मातुः समीपे वत्सः संचरति एवमुषसः समीपे सूर्यस्य नित्यम् अवस्थानात्तद्वत्सत्वम् । अथवा यथा वत्सो मातुः स्तन्यं रसं पिबन् हरति एवमुषसोऽवश्यायाख्यं रसं पिबन् वत्स इत्युच्यते । तादृशी सती **आगात्** आगतवती । आगतायाः **अस्याः** उषसः **कृष्णा** कृष्णवर्णा रात्रिः **सदनानि** स्थानानि स्वकीयान्स्थार्धयामलक्षणानि **अरैक्** आरेचितवती कल्पितवती दत्तवतीत्यर्थः । उ इत्येतत् पादपूरणम् । अपि चैते रात्र्युषसौ **समानबन्धू** समानेनैकेन सूर्याख्येन बन्धुना सख्या युक्ते । यद्वा । सूर्येण सह संबद्धे। यथोषाः उदेष्यता सूर्येण संबद्धा एवं रात्रिरपि अस्तं यता सूर्येण संबद्धा **अमृते** मरणरहिते कालात्मकतया नित्यत्वात् । **अनूची** अनुञ्चन्त्यौ। प्रथमं रात्रिः पश्चादुषा इत्यनेन क्रमेण गच्छन्त्यौ । यद्वा । सूर्यगत्यनुसारेण गच्छन्त्यौ, एवं भूते **वर्णं** सर्वेषां प्राणिनां रूपम् **आमिनाने** जरयन्त्यौ । यद्वा । स्वकीयं रूपं हिंसन्त्यौ । उषसा नैशं तमो निवर्त्यते, प्रकाशात्मकमुषसो रूपम् रात्र्या । एवं विधे सत्यौ **द्यावा** द्योतमाने **चरतः** प्रतिदिवसमावर्तते । यद्वा । द्यावा नभसा अन्तरिक्षमार्गेण चरतः प्रतिदिवसं गच्छतः । अत्र—निरुक्तं 'रुशद्वत्सा सूर्यवत्सा । रुशदिति वर्णनाम रोचतेर्ज्वलतिकर्मणः । सूर्यमस्या वत्समाह--साहचर्याद्रसहरणाद्वा । रुशती श्वेत्यागात्, श्वेत्या श्वेततेररिचत्कृष्णा सदनान्यस्याः, कृष्णवर्णा रात्रिः कृष्णं कृष्यतेर्निकृष्टो वर्णः । अथैने संस्तौति समानबन्धू समानबन्धने अमृते अमरणधर्माणावनूची अनूच्याविवीतरेतरमभिप्रेत्य द्यावा वर्णं चरतस्ते एव द्यावौ द्योतनादपि वा द्यावा चरतस्तया सह चरत इति स्यादामिनाने आमिन्वाने अन्योन्यस्याध्यात्मं कुर्वाणे—( निरु० २, २० ) इति ।

**श्वेत्या** 'श्विता वर्णे' अस्मात् ण्यन्तात् 'अचो यत्' इति भावे

यत्, णिलोपः। अर्श आदित्वान्मत्वर्थीयः अच्। अमृते मृतं मरणमनयोर्नास्तीति बहुव्रीहौ 'नञो जरमरमित्रमृताः' इत्युत्तरपदाद्युदात्तत्वम्। अनूची अनुपूर्वादञ्चतेः 'ऋत्विक्' इत्यादिना क्विन्। 'अनिदिताम्' इति नलोपः। 'अञ्चतेश्चोपसंख्यानम्' इति ङीप्। 'अचः' इति अकारलोपे 'चौ' इति दीर्घः। 'अनुदात्तस्य च यत्रोदात्तलोपः' इति ङीप उदात्तत्वम्। 'सुपां सुलुक्' इति विभक्तेर्लुक्। आमिनाने 'मीङ् हिंसायाम्' क्रैयादिकः। शानचि 'मीनातेर्निगमे' इति ह्रस्वत्वम् ॥ २ ॥

* स्क० भा० * रुशच्छब्दो दीप्तिवचनः। वत्स इत्यादित्य उच्यते। स ह्युषसो वत्सस्थानीयः अपत्यत्वात्। कथम् अपत्यत्वम्। श्रुतेर्दर्शनात्। एवं हि श्रुतौ श्रूयते 'प्रजापतिर्वै स्वां दुहितरमभ्यध्यायत् दिवमित्यन्य आहुरुषसमित्यन्ये। तामृश्यो भूत्वा रोहितं भूतामभ्यैत्' ( ऐ० ब्रा० ३।३३ ) इत्येवमाद्युपक्रम्य 'तद्वा इदं प्रजापते रेतः सिक्तमधावत्तत् सरोऽभवत्' ( ऐ० ब्रा० ३।३३ ) इति च। 'तदग्निना वैश्वानरेण पर्यादधुः। तं मरुतो धून्वन्। तदग्निर्वैश्वानरः प्राच्यावयत्। तस्य यद्रेतसः प्रथममुददीप्यत तदसावादित्योऽभवत्' ( ऐ० ब्रा० ३।३४ ) इत्येवं प्रजापतेः सकाशादुषसि जात आदित्य इति श्रूयते। अतश्चोपपन्नमस्य तदपत्यत्वम्। यद्वा प्रातः प्रातरुषसः सकाशादादित्यो जायते। तदभिप्रायमस्यापत्यत्वम्। असत्यपि चापत्यत्वे तदीयरसहरणसामान्यादेष वत्सव्यपदेशः। यथा हि पशोर्वत्सः पय आख्यं रसं पिबन्नाहरति एवमसावादित्यः उषसोऽवश्यायाख्यम्। दीप्तादित्याख्यवत्सा। रुशती स्वयमपि च दीप्ता। श्वेत्या। उषसो नामैतत्। उषाः आ। अगात् उदिता। अरैक् रेचितवती। उ इति पदपूरणः। कृष्णा तमः सम्बन्धात् कृष्णवर्णा रात्रिः। सदनानि स्थानानि। अस्या उषसः।......उभे रात्र्युषसौ समानबन्धू। समानो बन्धुर्ययोस्ते समानबन्धू। प्रजापतिर्हि रात्र्युषसोः समानबन्धुः जनयितृत्वात्। आदित्यो वा, स हि जनयितृत्वेन रात्रेर्बन्धुः, जन्यत्वेनोषसः। जनयितृत्वेन वा उभयोः, स ह्यस्तमयेन रात्रिं जनयति उदयेन चोषसम्। अमृते अमरणधर्माणौ।

अहरन्तरेषु पुनः पुनरपि दृश्यमानत्वात् अनूचो परस्परेणानुगते। परस्परतः संवर्तिन्यौ संबद्धे चेत्यर्थः। द्यावा। द्युतेर्दीप्यतेर्वा। दीप्त्यर्थस्येदं रूपम्। स्वेन स्वेन तेजसा दीप्ते। वर्णं कृष्णं शुक्लं चात्मीयं वर्णम्। चरतः गच्छतः प्राप्नुत इत्यर्थः। अथवा द्यावेति दिवः पर्यायः, तृतीयैकवचनान्तश्चात्र द्रष्टव्यः। तृतीयानिर्देशाच्चात्र योग्यक्रियापदाध्याहारः। दिवा सह महत्वादिना गुणेन स्पर्धमाने दिवा वानुग्रहमाणे स्वं स्व वर्णं प्राप्नुत इति। द्यौर्हि तमसा ज्योतिषश्चात्मन्यवदानेन नानुगृह्णाति राज्युषसोः। आमिनाने। आङीषदर्थे, 'मीङ् हिंसायाम्' ईषत् हिंसन्त्यौ किम्। सामर्थ्यात् परस्पररूपम्। रात्रिर्ह्युषसो रूपम् ज्योतिरीषद्धिनस्ति। उषा अपि रात्रेस्तमः। अथवा द्यावेति सप्तम्येकवचनस्य आकार आदेशः, चरत इत्येतेन चास्य संबन्धः। दिवि चरतो गच्छतः। वर्णमित्येतत्तु आमिनाने इत्येतेन सम्बध्यते। आत्मीयं रूपमीषद्धिंसन्त्यौ। अथवा आमिनाने इत्याकारोऽध्यर्थे। मिनतिरपि सामर्थ्यात् करोत्यर्थः। आत्मीयं रूपमधि उपरि कुर्वाणे। कस्य सामर्थ्यात् प्रकृतत्वाच्च दिव एव॥ २॥

३

समानो अध्वा स्वस्रोरनन्तस्तमन्यान्या चरतो देवशिष्टे।
न मेथेते न तस्थतुः सुमेके नक्तोषासा समनसा विरूपे।

❀ ज्योत्स्ना ❀ [ अन्वयः ] स्वस्रोः अनन्तः अध्वा समानः। तं देवशिष्टे अन्यान्या चरतः। सुमेके नक्तोषासा विरूपे (अपि) समनसा न मेथेते। (तथा) न तस्थतुः।

[ हिन्दी ] *उषाका मार्ग और सौजन्य*—भगिनीरूप रात्री और उषा का अन्तरहित अकाशमार्ग एक है। इस मार्गको सूर्यदेवताके द्वारा अनुशासित होकर दोनों क्रमसे चलती हैं। अच्छी उत्पादन शक्तिसे सम्पन्न रात्रि और उषा, अन्धकार और प्रकाश द्वारा भिन्नरूपकी होनेपर भी एकमत होनेसे परस्पर बाधा

नहीं पहुँचाती है, और न कभी रुकती ही हैं ॥ ३ ॥

* सा० भा० * **स्वस्रोः** भगिन्योः रात्र्युषसोः **अध्वा** सञ्चरणसाधनभूतो मार्गः **समानः** एक एव। येनैव आकाशमार्गेणोषा निर्गच्छति तेनैव रात्रिरपि। स च मार्गः **अनन्तः** अवसानरहितः **तं** मार्गं **देवशिष्टे** देवेन द्योतमानेन सूर्येण अनुशिष्टे शिक्षिते सत्यौ **अन्यान्या** एकैका **चरतः** क्रमेण गच्छतः अपि च **सुमेके** शोभनमेहने सर्वेषामुत्पादकत्वात्। शोभनप्रजनने **नक्तोषासा** रात्रिरुषाश्च **विरूपे** तमः प्रकाशलक्षणाभ्यां विरुद्धरूपाभ्यां युक्ते अपि **समनसा** समानमनस्के ऐकमत्यं प्राप्ते सत्यौ **न मेथेते** परस्परं न हिंस्तः। तथा **न तस्थतुः** क्वचिदपि न तिष्ठतः। सर्वदा लोकानुग्रहार्थं गच्छतः इत्यर्थः।

**अन्यान्या** 'कर्मव्यतिहारे सर्वनाम्नो द्वे भवत इति वक्तव्यं समासवच्च बहुलम्' ( पा० म० ८।१।१२।११ ) इति अन्यशब्दस्य द्विर्भावः। 'तस्य परमाम्रेडितम्' इति आम्रेडितसंज्ञायाम् 'अनुदात्तं च' इति आम्रेडितानुदात्तत्वम्। **देवशिष्टे** शासु अनुशिष्टौ अस्मात् कर्मणि निष्ठा। 'यस्य विभाषा इति इट् प्रतिषेधः। शास् इदङ्हलोः' (पा० ६।४।३४) इति उपधाया इत्वम्। 'शासिवसिघसीनां च' इति षत्वम्। तृतीया कर्मणि इति पूर्वपदप्रकृतिस्वरत्वम्। **मेथेते** 'मिथृ मेथृ मेधाहिंसनयोः' भौवादिकः अनुदात्तेत्। **सुमेके** मिह् सेचने। 'भावे घञ्'। शोभनो मेहो ययोस्ते। व्यत्ययेन ककारः उत्तरपदस्य ञित्स्वरेणाद्युदात्तत्वम्। 'आद्युदात्तं द्व्यच्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम्। **नक्तोषासा** सुपां सुलुक्' इति विभक्तेराकारः। 'अन्येषामपि दृश्यते' इति संहितायामुपधादीर्घः ॥ ३ ॥

* स्क० भा० * तमिति तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः। योऽयं समानः अध्वा गमनमार्गः आगामिकाललक्षणः। स्वस्रोः भगिन्योः, रात्र्युषसौ ह्येकेन प्रजापतिना आदित्येन वा जन्येते इत्युपपन्नमनयोर्भगिनीत्वम्। कीदृशः। अनन्तः अत्यन्तबहुः। तमन्यान्या। अन्यान्याशब्दः परस्परपर्यायः तृतीयैकवचनान्तश्चात्र द्रष्टव्यः। तृतीयाश्रुतेर्योग्यक्रियाध्याहारः। परस्परेण

सम्बद्धे चरतः गच्छतः। देवशिष्टे। शासिरत्र शुद्धोऽपि सामर्थ्यात् सोपसर्गार्थो द्रष्टव्यः। सर्वप्राणिनामुपकाराय देवैरनुशिष्टे। अनुज्ञातेत्यर्थः। परस्परसंबद्धे अपि च गच्छतः। न मेथेते। मेथतिराक्रोशकर्मा। मनुष्यवत् परस्परं नाक्रोशतः। न तस्थतुः क्षणमपि न तिष्ठतः। कीदृश्यौ। सुमेके। मेकशब्दो मुखवचनः इति केचिदाहुः। सुमुख्यौ। सृष्टेः प्रथमः संवत्सरो मेक इत्युच्यते इत्यन्ये। तथाहि 'मेकः संवत्सरः ऋतवो मेकपुत्रा' इति पौराणिकाः स्मरन्ति। शोभनो मेको ययोः संबन्धी सृष्टिकालजन्यतया ते सुमेके। आद्यसंवत्सरसृष्टे इत्यर्थः। के नक्तोषसा रात्र्युषसौ। समनसा संगतचित्ते। परस्परवशवर्त्तिन्याविव्यर्थः। विरूपे विभिन्नरूपे विचित्ररूपे वा ॥ ३ ॥

४

**भास्वती नेत्री सूनृतानामचेति चित्रा वि दुरो न आवः।**
**प्रार्प्या जगद्व्यु नो रायो अख्यदुषा अजीगर्भुवनानि विश्वा॥**

❀ ज्योत्स्ना ❀ [ अन्वयः ] भास्वती सूनृतानां नेत्री अचेति। चित्रा नः दुरो वि आवः। जगत् प्रार्प्य नः रायः वि अख्यत्। उषाः विश्वा भुवनानि अजीगः।

[ हिन्दी ] उषः काल की स्फूर्ति—विशिष्ट प्रकाशसंपन्ना, वाणी की जननी (क्योंकि उषः काल होने के बाद ही पक्षी चहचहाते हैं, उस) उषा को हमनें जान लिया है। प्रशंसनीया उषानें हमारे दरवाजे खोल दिए हैं। यह उषा सम्पूर्ण जगत् में प्रकाश करके हमारे धनों को स्पष्ट प्रकाशित करती है। उषा समस्त विश्वको ( रात्रि में अन्धकार में छिपे रहते हैं उनको ) उगिल देती है ॥ ४ ॥

❀ सा० भा० ❀ भास्वती विशिष्टप्रकाशनयुक्ता। सूनृतेति वाङ्नाम। सूनृतानां वाचां नेत्री उत्पादयित्री उषसः प्रादुर्भावानन्तरम् हि पशु-पक्षि

मृगादयः सर्वे शब्दं कुर्वन्ति। एवं भूता उषाः **अचेति** अस्माभिः अज्ञायि। चित्रा चायनीया ज्ञाता सा **नः** अस्माकं **दुरः** द्वाराणि तमसा तिरोहितानि वि **आवः** व्यवृणोत्। यथास्माभिर्दृश्यन्ते तथा तमो निवार्य प्रकाशयतीत्यर्थः। अपि च **जगत्** सर्वं भुवनं **प्रार्प्य** प्रकाशं गमयित्वा **नः** अस्माकं **रायः** धनानि वि **अख्यत्** विशिष्टप्रकाशनयुक्तान्यकरोत्। उ इत्येतत्पादपूरणम्। सैषा **उषा विश्वा भुवनानि** सर्वाणि भुवनानि तमसा तिरोहितत्वेन अविद्यमानकल्पानि **अजीगः** उद्गिरति स्वमुखान्निर्गमयति। स्वकीयेन प्रकाशेन तमो निस्सार्य पुनरुत्पन्नानीव करोतीत्यर्थः।

**नेत्री** 'णीञ् प्रापणे' तृच् 'ऋन्नेभ्यो ङीप्' 'उदात्तयणो हल्पूर्वात्' इति ङीप उदात्तत्वम्। **अचेति** 'चिती संज्ञाने'। **दुरः** द्वारशब्दस्य 'रयेर्मतौ बहुलम्' ( पा० ६।१।३४ वा० ) इति बहुलवचनात् संप्रसारणम्। **आवः** 'वृञ् वरणे' लुङि 'मन्त्रे घस्' इति च्लेर्लुक् गुणः, 'हल्ङ्याभ्यः' इति तिलोपः 'छन्दस्यपि दृश्यते' इति आडागमः। **प्रार्प्य** 'ऋ गतौ' णौ 'अर्तिह्री' इत्यादिना पुक् 'समासेऽनञ् पूर्वे क्त्वो ल्यप्'। **अख्यत्** 'ख्या प्रकथने' लुङि 'अस्यतिवक्ति' इत्यादिना च्लेरङादेशः। **अजीगः** 'गॄ निगरणे' लङि तिपि 'बहुलं छन्दसि' इति विकरणस्य श्लुः। द्विर्वचनोरदत्वहलादिशेषाः 'अर्तिपिपर्त्योश्च बहुलम् छन्दसि' इति अभ्यासस्य इत्वम्। छान्दसः ईकारः। यद्वा अस्मात् ण्यन्तात् लुङि चङि द्विर्भावसन्वद्भावेत्वदीर्घाः। छान्दसः चङो लोपः॥ ४॥

* स्क० भा० * भास्वती दीप्तिमती। नेत्री प्रवर्तयित्री। सूनृतानाम्। अपठितमपि वाङ्नामैतत्। वाचाम्। उषउदयकाले हि प्राणिनां वाचः प्रवर्तन्ते, अतः सैव तासां प्रवर्तयित्रीत्युच्यते। अचेति चेत्यते ज्ञायते दृश्यत इत्यर्थः। चित्रा विचित्रा पूज्या वा दृश्यमानैव। दुरः सर्वार्थानां दृशां वाग्द्वाराणि। नः अस्मभ्यम्। वि आवः विवृणोति प्रकाशयतीत्यर्थः। न चेदानीमेव केवलम्। किं तर्हि। पूर्वस्मिन्नपि काले। प्रार्प्या। आपिर्गत्यर्थः। प्रगमय्य जगत्। तेषु तेषु व्यापारेषु कृत्स्नं जगत् प्रवर्त्येत्यर्थः। व्यु नः। उ इति

पदपूरणः। नः अस्मभ्यं रायः धनानि व्यख्यत्। ख्यतिरत्रान्तर्णीतण्यर्थो द्रष्टव्यः। विविधं ख्यापितवती प्रकाशितवतीत्यर्थः। किं च उषाः अजीगः जिगर्तिरत्र सामर्थ्यात् गत्यर्थः। 'यो वां दूतो न धिष्ण्यौ' (ऋ० ७।६७।१) इति यथा। उषाः गच्छति। भुवनानि विश्वा सर्वाणि भूतजातानि प्रति ॥ ४ ॥

५

जिह्मश्ये३ चरितवे मघोन्याभोगय इष्टये राय उ त्वम्।
दभ्रं पश्यद्भ्य उर्विया विचक्ष उषा अजीगर्भुवनानि विश्वा ॥

* ज्योत्स्ना * [ अन्वयः ] मघोनी जिह्मश्ये चरितवे, त्वम् आभोगये, 'त्वम्' इष्टये, 'त्वं' राये (व्युच्छन्ती भवति)। उ दभ्रं पश्यद्भ्यः विचक्षे। उर्विया उषाः विश्वा भुवनानि अजीगः।

[ हिन्दी ] *उषा के द्वारा सचेत करना*—धन सम्पन्न उषा टेढ़े से सोये हुए (निद्रामग्न) व्यक्तियों के चलाने (जगाने) के लिए, किसी को शब्द आदि विषयों की प्राप्ति, किसी को यज्ञादि कार्य में प्रवृत्त करने, किसी को धन उपार्जन के लिए प्राप्त होती है। कम देखने वाले इसमें स्पष्ट देखते हैं। ऐसी विशाल उषा समस्त भुवनों को ( रात्रिके पेट से ) उगलती है ॥ ५ ॥

* सा० भा० * मघोनी इत्युषसो नामधेयम्। मघोनी धनवती उषाः जिह्मश्ये जिह्मं वक्रं शयानाय पुरुषाय चरितवे चरितुं शयनादुत्थाय स्वापेक्षितं प्रति गन्तुं व्युच्छन्ती भवति। त्वम् अयमेकशब्दपर्यायः सर्वनामशब्दः। यदाह 'त्व इति विनिग्रहार्थीयं सर्वनामानुदात्तम्' ( निरु० १।७ ) इति। त्वं एकं प्रति आभोगये आभोग्याय शब्दादिविषयार्थं तथा अपरं प्रति इष्टये यागार्थं तथा अन्यं प्रति राये धनार्थं च व्युच्छन्तीति शेषः। उ शब्दश्चार्थे। अपि च दभ्रम् अल्पं पश्यद्भ्यः अन्धकारावृतत्वेन ईषद्द्रष्टृभ्यो मनुष्येभ्यः विचक्षे विशिष्टप्रकाशाय व्युच्छन्ती उर्विया

उर्वी विस्तीर्णा उषाः सर्वाणि भूतजातानि तमसा तिरोहितानि प्रकाशदानेन उद्गीर्णानीव करोति ।

जिह्मश्ये 'शीङ् स्वप्ने' जिह्मं शेते इति जिह्मशीः । 'क्विप् च' इति क्विप् । कृदुत्तरपदप्रकृतिस्वरत्वम् । 'एरनेकाचः' इति यण् । उदात्तस्वरितयोर्यणः' इति विभक्तेः स्वरितत्वम् । **आभोगये** आभोगशब्दाच्चतुर्थ्येकवचने यकारोपजनः । यद्वा—आङ्पूर्वात् भुजेः बहुलवचनादौणादिकः किप्रत्ययः कुत्वं च । **उर्विया** 'इयाडियाजीकाराणामुपसंख्यानम्' ( पा० ७।१।३९ वा० ) इति उर्वीशब्दादुत्तरस्य सोः डियाजादेशः । **विचक्षे** 'चक्षिङ् व्यक्तायां वाचि' विपूर्वादस्मात् संपदादिलक्षणो भावे क्विप् ॥५॥

* स्क० भा० * जिह्मशब्दः कुटिलवचनः । 'शीङ् स्वप्ने' किंचित् प्रति कुटिलशयनाय । चरितवे गमनाय अन्यं प्रति । मघोनी धनवत्युषाः । आभोगये संभोगायान्यं प्रति । इष्टये यागायान्यं प्रति । राय उ त्वम् । उ इति पदपूरणः । त्वमिति सर्वनाम एकशब्देन समानार्थः । एकशब्दश्चान्यार्थे । धनायान्यं प्रति । उषसि ह्यागतायां कश्चिन्निद्रालुः पार्श्वेनावस्थाय संकोच्य जङ्घे कुटिलः शेते ।..................कश्चिद् भोजनादिसंभोगान् कर्तुमारभते । कश्चिद्यष्टुं, कश्चिद् धनार्थं यतते । एतदुच्यते जिह्मश्य इत्यादिना । दभ्रं पश्यद्भ्यः । दभ्रमित्यल्पनाम । तमसा आच्छादितत्वात् अल्पं पश्यद्भ्यो मनुष्येभ्यः । उर्विया विचक्षे । उर्वियेति प्रथमाया इयादेशः । विचक्षे इत्यपि चक्षिरन्तर्णीतण्यर्थः । तुमर्थे च कन् प्रत्ययः । विस्तीर्णं विख्यापयितुम् । तमसा चाभिभूतत्वात् अस्फुटं पश्यद्भ्यः स्फुटं दर्शयितुमित्यर्थः । एवमुषा अजीगः भुवनानि विश्वा ॥ ५ ॥

[ इति उषःसूक्ते प्रथमो वर्गः ]

६

**क्षत्राय त्वं श्रवसे त्वं महीया इष्टये त्वमर्थमिव त्वमित्यै ।**
**विसदृशा जीविताभिप्रचक्ष उषा अजीगर्भुवनानि विश्वा ॥**

* ज्योत्स्ना * [अन्वयः] उषाः क्षत्राय त्वम्, श्रवसे त्वम्, महीयै इष्टये त्वम्, अर्थमिव इत्यै त्वं (व्युच्छन्ती) विसदृशा जीविता अभिप्रचक्षे। 'उषाः' विश्वा भुवनानि अजीगः।

[हिन्दी] *उषा का उद्यम*—किसी को धन, किसी को अन्न, किसी को महान् यज्ञ, किसी को अपेक्षित पदार्थ की प्राप्ति के गमन (उद्योग) के लिए प्राप्त होती हुई उषा नाना प्रकार की खेती व्यापार आदि जीविकाओं को प्रकाशित करती हैं। और उषा ही समस्त लोकों को अन्धकार से बाहर उगिल देती है॥ ६॥

* सा० भा * **क्षत्राय,** धननामैतत्। धनार्थं त्वं एकं प्रति उषा व्युच्छन्ती इति शेषः। तथा **श्रवसे** अन्नार्थं त्वं एक प्रति **महीयै** महत्यै **इष्टये** अग्निष्टोमादिमहायज्ञार्थं त्वं एक प्रति व्युच्छन्ती। तथा **अर्थमिव** अपेक्षितमर्थं प्रति **इत्यै** गमनार्थं त्वं एकं प्रति व्युच्छन्ती। अपि च **विसदृशा** विलक्षणानि नानारूपाणि **जीविता** जीवितानि जीवनोपायभूतानि कृषिवाणिज्यादीनि **अभिप्रचक्षे** आभिमुख्येन प्रकाशयितुं व्युच्छन्ती **उषाः** सर्वाणि भूतजातानि तमसा निगीर्णानि **अजीगः** प्रकाशनेन उद्गीर्णानीवाकरोत्।

**त्वम्** 'त्वसमसिमनेमेत्यनुच्चानि' (फि० सू० ७८) इति सर्वानुदात्तत्वम्। **महीयै** मह्यै, महेः 'इन् सर्वधातुभ्यः' इति इन् प्रत्ययः। 'कृदिकारादक्तिनः' इति ङीष्। 'उदात्तयणः' इति विभक्तेरुदात्तत्वम्। छान्दसः ईकारोपजनः। यद्वा—महीशब्दादुत्तरस्य चतुर्थ्येकवचनस्य 'याडापः' (पा० ७।३।११३) इति व्यत्ययेन याडागमः। छान्दसमन्तोदात्तत्वम्। **विसदृशा** 'त्यदादिषु दृशोऽनालोचने कञ्च' इत्यत्र 'समानान्ययोश्च' (पा० ३।२।६० वा०) इतिवचनात् दृशेः कञ्। 'समानस्य छन्दसि' इति सभावः। विगतसादृश्यानि विसदृशानि। 'शेश्छन्दसि बहुलम्' इति शेर्लोपः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। **अभिप्रचक्षे** 'चक्षेः तुमर्थे सेसेन्'

इति सेनू प्रत्ययः 'स्कोः संयोगाद्योः' इति कलोपः कत्वषत्वे ॥ ६ ॥

❀ स्क० भा० ❀ क्षत्रमिति धननाम। धनाय एकं प्रति। श्रवसे त्वं अन्नायान्यं प्रति। महीयै मंहतेर्दानकर्मणः, महेर्वा पूजार्थस्येदं रूपम्। दानार्थं पूजार्थं वान्यं प्रति। इष्टये त्वं यागायान्यं प्रति अर्थमिव त्वमित्यै, इति-गमनम्। यथा अर्थी नियमेनादरेण वा अर्थं प्रति गच्छति तद्वत् नियमेना-दरेण वा गमनायान्यं प्रति। एवं विसदृशा विसदृशानि। जीविता कर्तर्ययं क्तप्रत्ययः जीवानि। अभिप्रचक्षे अभिप्रकाशयितुम्। उषा अजीगः भुवनानि विश्वा ॥ ६ ॥

७

एषा दिवो दुहिता प्रत्यदर्शि व्युच्छन्ती युवतिः शुक्रवासाः।
विश्वस्येशाना पार्थिवस्य वस्व उषो अद्येह सुभगे व्युच्छ ॥

❀ ज्योत्स्ना ❀ [ अन्वयः ] दिवो दुहिता एषा युवतिः शुक्र-वासाः विश्वस्य पार्थिवस्य वस्वः ईशाना व्युच्छन्ती (उषाः) प्रति अदर्शि। हे सुभगे! उषः! अद्य इह व्युच्छ।

[ हिन्दी ] *अन्धकार को हटाना*—आकाश की कन्या यह फलदायिनी, या सदा जवान, शुद्ध वस्त्र वाली समस्त पार्थिव धन की स्वामिनी अन्धकार को हटाती हुई उषा सबको दिखाई पड़ी है। हे ( सौभाग्यशालिनि! ) धनवति! उषः! आज इस यज्ञस्थल में अन्धकार को हटाओ ॥७॥

❀ सा० भा० ❀ दिवो दुहिता व्योम्नो दुहितृस्थानीया। तस्य हि पूर्वार्धे उषा उत्पद्यते। सा एषा व्युच्छन्ती तमो वर्जयन्ती प्रत्यदर्शि सर्वैः प्राणिभिर्दृष्टाभूत्। कीदृशीः सा। युवतिः यावयित्री फलानां पुरुषैः प्रापयित्री, नित्ययौवनोपेता वा। शुक्रवासाः श्वेतवसना निर्मलदीप्तिर्वा। तथा विश्वस्य सर्वस्य पार्थिवस्य पृथिव्याः संबन्धिनः वस्वः धनस्य ईशाना ईश्वरी। हे सुभगे! शोभनधने उषः! तादृशी त्वं अद्य अस्मिन्

काले इह अस्मिन् देवयजनदेशे व्युच्छ तमांसि विवासय वर्जयेत्यर्थः।

दिवः 'ऊडिदम्' इति विभक्तेरुदात्तत्वम्। व्युच्छन्ती 'उच्छी विवासे' विवासो वर्जनम्। तौदादिकः। युवतिः 'यूनस्तिः' (पा० सू० ४।१।७७)। शुक्रवासाः 'वस आच्छादने' वस्ते सर्वमाच्छादयतीति प्रकाशो वासः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। ईशाना 'ईश ऐश्वर्ये' अदादित्वात् शपो लुक्। अनुदात्तेत्वात् लसार्वधातुकानुदात्तत्वे धातुस्वरः। पार्थिवस्य 'पृथिव्या ञाञौ' इति प्राग्दीव्यतीयः अञ्प्रत्ययः। वस्वः लिङ्गव्यत्ययः। 'घेर्ङिति' इति गुणस्य 'जसादिषु छन्दसि वावचनम्' इति विकल्पितत्वाद-भावे यणादेशः॥ ७॥

* स्क० भा * एषा उषा दिवः दुहिता। द्यु प्रभवत्वादुषा दिवो दुहितेत्युच्यते। प्रत्यदर्शि। प्रतिशब्दोऽत्र धात्वर्थानुवादी दृश्यते। व्युच्छन्ती 'उच्छी विवासे' तमांसि विवासयन्तीत्यर्थः। युवतिः सर्वदैव तरुणी। शुक्रवासाः। शुक्लः प्रकाशो वासःस्थानीयो यस्याः सा शुक्लवासाः। विश्वस्य सर्वस्य ईशाना ईश्वरी। पार्थिवस्य पृथिव्यां भवस्य, वस्वो धनस्य। परः पादः प्रत्यक्षकृतत्वात् भिन्नं वाक्यम्। हे उषः अद्य इहास्मदीये यज्ञे सुभगे सुधने व्युच्छ तमांसि। विवासयन्ती जीव॥ ७॥

८

परायतीनामन्वेति पाथ आयतीनानां प्रथमा शश्वतीनाम्।
व्युच्छन्ती जीवमुदीरयन्त्युषा मृतं कं चन बोधयन्ती॥

* ज्योत्स्ना * [ अन्वयः ] परायतीनां पाथः अनु एति। आयतीनां शश्वतीनां प्रथमा व्युच्छन्ती जीवम् उदीरयन्ती उषाः, मृतं कं चन बोधयन्ती ( आगात् )।

[ हिन्दी ] *उषा का रूढिवाद और जगाना*—यह उषा बीती हुई उषाओं के मार्ग अन्तरिक्ष के पीछे चल रही है। आने वाली बहुत सी उषाओं में प्रथम यह उषा अन्धकार हटाती हुई

प्राणी को पलंग से उठाती हुई निद्रा में मृतप्राय किसी को जगाती हुई आ गई है ॥ ८ ॥

* सा० भा० * **परायतीनां** परागच्छन्तीनाम्, अतीतानामुषसां संबन्धि **पाथः** अन्तरिक्षैकदेशलक्षणं स्थानम्। 'पाथोऽन्तरिक्षं पथा व्याख्यातम्' ( निरु० ६।७ ) इति यास्कः। अद्यतन्युषाः **अन्वेति** अनुगच्छति। अतीता उषसो यथा व्युष्टा एवमेवैषापि व्युच्छतीत्यर्थः। तथा **आयतीनां** आगच्छन्तीनाम् **शश्वतीनां** बह्वीनामुषसां **प्रथमा** आद्या भवति। एषा यथा वर्तते एवमेव आगामिन्योऽप्युषस इत्यर्थः। तादृशी **व्युच्छन्ती** तमो वर्जयन्ती **जीवं** प्राणिनां जीवात्मानम् **उदीरयन्ती** शयनादूर्ध्वं प्रेरयन्ती **उषाः** **मृतं** स्वापसमये प्रलीनेन्द्रियत्वात् मृतमिव सन्तं **कंचन** कमपि पुरुषं **बोधयन्ती** पुनः इन्द्रियप्रवेशेन चेतनं कुर्वती प्रवर्तते इति शेषः।

**परायतीनां** 'इण् गतौ' लटः शतृ; 'इणो यण्, उगितश्च' इति ङीप् 'ङ्याश्छन्दसि बहुलम्' इति नाम उदात्तत्वम् ॥ ८ ॥

* स्क० भा० * परायतीनां परागच्छन्तीनां गवादिजातीनाम्। अन्वेति अनुगच्छति। पाथः पन्थानः। आयतीनां आगच्छन्तीनां च प्रथमा, शश्वतीनां बह्वीनां नित्यानां वा। याश्च दूरवर्तिन्यो गवादिजातयो याश्च सन्निकृष्टाः, सर्वव्यापित्वात् ताः सर्वा अनुगच्छतीत्यर्थः। किं कुर्वन्ती। उच्यते। तमांसि विवासयन्ती। जीवमुदीरयन्ती। जीवं प्राणिजातम्। उदित्येषः प्रेत्येतस्य स्थाने, प्राणिजातं च तेषु तेषु व्यापारेषु प्रेरयन्ती का ? उषाः। मृतं कं चन बोधयन्ती। मृतशब्दोऽत्र लुप्तोपमो द्रष्टव्यः। मृतमिव च कंचिदत्यन्तनिश्चेष्टं सुप्तं सर्वप्राणिजातं प्रबोधयन्ती ॥ ८ ॥

९

उषो यदग्निं समिधे चकर्थ वि यदावश्चक्षसा सूर्यस्य।
यन्मानुषान् यक्ष्यमाणाँ अजीगस्तद्देवेषु चकृषे भद्रमप्नः ॥

❀ ज्योत्स्ना ❀ [अन्वयः] हे उषः ! (त्वम्) अग्निं समिधे यत् चकर्थ। सूर्यस्य चक्षसा यत् वि आवः। मानुषान् यक्ष्यमाणान् यत् अजीगः। देवेषु भद्रं तत् अप्नः चकृषे।

[हिन्दी] आदर्श कार्य—हे उषः ! तुम गार्हपत्य आदि अग्नियों के प्रज्वलित करने के लिए जो करती हो, तथा सूर्य के प्रकाश से जो अन्धकार हटाती हो, यज्ञ करने वाले मनुष्यों को जो अन्धकार से उगिलती हो, हे उषः! तुमने देवताओं के लिए आदर्शरूप ये तीनों काम किये हैं ॥ ९ ॥

❀ सा० भा० ❀ हे उषः ! त्वं अग्निं गार्हपत्यादिरूपं समिधे समिन्धनाय प्रज्वलनार्थं यत् चकर्थ कृतवती। उषः काले ह्यग्नयो होमार्थमुपसमिध्यन्ते। अपि च तमसा तिरोहितं जगत् सूर्यस्य चक्षसा प्रकाशेन यत् वि आवः व्यवृणोः तमसा विश्लिष्टमकरोः। तथा मानुषान् मनोः पुत्रान् मनुष्यान् यक्ष्यमाणान् यागं करिष्यतस्त्वं यत् अजीगः पूर्वं तमसा ग्रस्तान् प्रकाशेन उद्गीर्णानीवाकरोः। हे उषः ! देवेषु मध्ये त्वमेव भद्रं भजनीयं तत् एतत् त्रिविधं अप्नः कर्म चकृषे कृतवती।

आवः 'वृञ् वरणे' लुङि 'मन्त्रे घस' इति च्लेर्लुक्। गुणे 'हल्ङ्याभ्यः' इति सिलोपः। 'छन्दस्यपि दृश्यते' इति आडागमः। मानुषान् 'मनोर्जातावञ्यतौ षुक् च' इति अञ् षुगागमश्च ॥ ९ ॥

❀ स्क० भा० ❀ हे उषः यदाहवनीयाख्यमग्निम्। समिधे समिन्धनाय। चकर्थ करोषि। समिन्धयसीत्यर्थः। उषसि ह्युदितायामग्निहोत्रिण आहवनीयं समिन्धयन्ति नानुदितायाम्। अतस्तमुषा एव समिन्धयतीत्युच्यते। वि यदावः विवृणो इत्यर्थः। चक्षुषा दर्शनेन प्रकाशाख्येन, सूर्यस्य संबन्धिना, सूर्यप्रभवेनेत्यर्थः। उषसो हि प्रकाशः उदेष्यतः सूर्यात् प्रभवति। यच्च मानुषान् मनुष्यान् यक्ष्यमाणान् प्रति। अजीगः गच्छसि। तत् त्रिविधमपि देवेषु। निर्धारण एषा सप्तमी। देवानां मध्ये त्वमेवैका चकृषे करोषि। भद्रं कल्याणं, अप्नः कर्म ॥ ९ ॥

१०

क्रियात्या यत्समया भवाति या व्यूषुर्याश्च नूनं व्युच्छान् ।
अनु पूर्वाः कृपते वावशाना प्रदीध्याना जोषमन्याभिरेति ॥

* ज्योत्स्ना * [ अन्वयः ] (उषाः) समया भवाति यत् कियति आ ? याः व्यूषुः नूनं याः च व्युच्छान् (तत्र) पूर्वाः वावशानाः अनु कृपते । प्रदीध्यानाः अन्याभिः जोषम् एति ।

[ हिन्दी ] *उषा से हमारे अतीत एवं भविष्य का संबन्ध*—उषा समीप से आती है वह समय कितना है ? [ अर्थात् उषा कब सी प्रगट हुई है यह पता नहीं—अथवा उषःकाल का समय कितना है ? थोड़ा ही है परन्तु ] जो उषाएँ बीत गई हैं या निश्चित ही आवेंगी उन सबमें बीती उषाओं की कामनाएँ वाली, आज की उषाएँ बराबर समर्थ होती हैं (अर्थात् हमारी अतीत की कामनाएँ आज और भविष्य में असर करती रहती हैं) आजकी चमकती उषा भावी उषाओं के साथ मिलती है ॥ १० ॥

* सा० भा० * समया इत्यव्ययं समीपवचनम् । उषाः समया भवाति समीपस्था भवतीति यत् एतत् तत् कियति काले प्रवृत्तं परिसमाप्तं वा इति, आकारः प्रश्नार्थः । एतदुक्तं भवति । उषा येन कालेन संयुक्ता स कालः कियान् ? तस्य कालस्य किं परिमाणमिति ? अनेन उषसोऽनन्तत्वमुक्तम् । तदेव स्पष्टीकरोति । पुरा याः उषसः व्यूषुः व्युष्टाः संजाताः । नूनम् अवश्यमितः परं याश्च उषसः व्युच्छान् व्युच्छन्ति व्युष्टा भविष्यन्ति । तत्र पूर्वाः व्युष्टा अतीता उषसः वावशाना कामयमाना इदानीं वर्तमाना उषाः अनु कृपते अनुकल्पते समर्था भवति । अतीता उषसो यथा प्रकाशमकुर्वन् तद्वदेषापि प्रकाशं करोतीत्यर्थः । तथा प्रदीध्याना प्रकर्षेण दीप्यमाना उषाः अन्याभिः आगामिनीभिः ।

उषोभिः जोषं सह पति संगच्छते। आगामिन्योऽपि एतदीयं प्रकाशं अनुकुर्वन्तीत्यर्थः।

कियति किं परिमाणस्य 'किमिदंभ्यां वो घः' (पा० ५।२।४०) इति घत्वविधानसामार्थ्यात् किंशब्दादपि परिमाणार्थे वतुप्, वकारस्य घत्वम् 'इदं किमोरीश्की' (पा० ६।३।९०) इति किमः की आदेशः। घस्य इयादेशे 'यस्य' इति लोपः प्रत्ययाद्युदात्तत्वम्। छान्दसः सांहितिको दीर्घः। भवाति लेटि आडागमः। व्यूषुः विपूर्वो वसतिर्व्युच्छने वर्तते। लिटि उसि कित्वे यजादित्वात् संप्रसारणं द्विर्वचनादि। व्युच्छान् 'उच्छी विवासे'। विवासो वर्जनम्। लेटि आडागमः। संयोगान्तस्य लोपः। कृपते 'कृपू सामर्थ्ये'। व्यत्ययेन शः। वावशाना 'वश कान्तौ' अस्मात् यङ्लुगन्तात् ताच्छीलिकः चानश्। प्रदीध्याना 'दीधीङ् दीप्तिदेवनयोः' लटः शानच्। अदादित्वात् शपो लुक्। 'जक्षित्यादयः षट्' इति अभ्यस्तसंज्ञायाम् 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम्। गतिसमासे कृदुत्तरपदप्रकृतिस्वरत्वम् ॥१०॥

*स्क० भा०* आकारोऽत्र पदपूरणः, स्विदित्यस्य वार्थे। स्विच्छब्दश्च पुनरित्यनेन समानार्थः वितर्कवचनः। कियति पुनर्जगतः प्रदेशे समया भवाति। समयाशब्दः समीपवचनः। समीपीभवत्युषाः। नैव जानीमः कियत्यपि जगतः प्रदेशे समीपीभवत्युषा इति। सर्वव्यापिन्येव लक्ष्यते इत्यर्थः। या किं करोतीत्युच्यते। यत् प्रथमैकवचनस्यात्र लुग् द्रष्टव्यः। या व्यूषुः या उषसः पूर्वकालेषु व्युष्टवत्यः। याश्च नूनं व्युच्छान्। नूनमिति पदपूरणः इदानीमित्यस्य वार्थे। याश्चेदानीं व्युच्छन्ति। यच्छब्दश्रुतेस्तच्छब्दोऽध्याहर्तव्यः। ताः सर्वाः। पूर्वाः पूर्ववृत्ताः। अनुकृपते। कृपा कृपण्यतीत्यर्चतिकर्मसु पाठात् कृपिरत्र············यच्च उषस्युदितायां स्तोतारः स्तुवन्ति तदुषा एव स्तौतीत्युच्यते। वावशाना। वश कान्तौ, वाश्र शब्दने इत्यनयोरन्यतरस्येदं रूपम्। कामयमाना शब्दं वा कुर्वन्तीत्यर्थः। यच्च उषस्युदितायां············कामयन्ते शब्दं वा कुर्वन्ति तदुषस्येवोपचर्यते।

या च प्रदीध्याना। दीध्यतेर्दीप्त्यर्थस्य रूपम्। प्रकर्षेण दीप्यमाना। जोषं प्रति अन्याभिरुषोभिः सह एति गच्छति। तुल्यकालाभिरुषोभिः सहैकतां प्रतिपद्यते न विरुद्धयत इत्यर्थः॥ १०॥

[ इति उषःसूक्ते द्वितीयो वर्गः ]

११

**ईयुष्टे ये पूर्वतरामपश्यन् व्युच्छन्तीमुषसं मर्त्यासः।**
**अस्माभिरू नु प्रतिचक्ष्याभूदो ते यन्ति ये अपरीषु पश्यान्॥**

* ज्योत्स्ना * [ अन्वयः ] ये मर्त्यासः व्युच्छन्तीं पूर्वतराम् उषसम् अपश्यन् ते ईयुः। अस्माभिः नु प्रतिचक्ष्या अभूत्। अपरीषु ये पश्यान् ते उ ओ यन्ति।

[ हिन्दी ] *उषा और जीवन के लिए पाठ*—जिन मनुष्यों ने अन्धकार हटानेवाली अतीत काल की उषाएँ देखी हैं वे ( संसारसे ) चले गये। आज वही उषा हमारे लिए सुन्दर रीति से द्रष्टव्य बनी है ( वे हम भी कभी चले जायँगे )। तथा जो भावी उषाओं को देखेंगे वे भी (अपने जीवन में दिन कम करते) चले जा रहे हैं॥ ११॥

* सा० भा० * **ये मर्त्यासः** मरणधर्माणो मनुष्या **व्युच्छन्तीं** विवासयन्तीं **पूर्वतराम्** अतिशयेन पूर्वां विप्रकृष्टाम् **उषसम् अपश्यन्** दृष्टवन्तः **ते** मनुष्याः **ईयुः** गताः। तथा **अस्माभिः** अपि **नु** इदानीं **प्रतिचक्ष्या** प्रकर्षेण द्रष्टव्या **अभूत्** जाता। तथा **अपरीषु** भावनीषु रात्रिषु **ये** मनुष्याः एतामुषसं **पश्यान्** पश्यन्ति। **ते, आ उ** इति निपातद्वयसमुदायः। तत्र उ इत्येतदवधारणे। एव **यन्ति** आगच्छन्त्येव। कालत्रयेऽप्येषा व्याप्य वर्तते इत्यर्थः।

ईयुः 'इण् गतौ'। लिटि उसि 'इणो यण्' इति यणादेशः। 'द्विर्वचनेऽचि' इति तस्य स्थानिवद्भावात् द्विर्भावे 'दीर्घ इणः किति' ( पा० ७।

४। ६६) इति अभ्यासस्य दीर्घत्वम्। सेः 'युष्मत्तत्ततक्षुःष्वन्तःपादम्' इति षकारस्य षत्वं ष्टुत्वं च। मर्त्यासः 'आज्जसेरसुक्' ॥ ११ ॥

❀ स्क० भा० ❀ ईयुः ते ते गताः। मृतास्ते इत्यर्थः। ये पूर्वतरां पूर्वप्रवृत्ततराम्। अतीतकालामित्यर्थः। अपश्यन् दृष्टवन्तः। व्युच्छन्तीं तमांसि विवासयन्तीम्। उषसं मर्त्यासः मनुष्याः अस्माभिरू नु उकारोऽत्रापिशब्दस्यार्थे। नुशब्दः पदपूरणः। अस्माभिरपीदानीन्तनैः। प्रतिचक्ष्या। प्रतिशब्दोऽत्र धात्वर्थानुवादी। चष्टतिः पश्यतिकर्मा, द्रष्टव्या अभूत् भवति। अस्मदादयोऽपि वर्तमानकालामुषसं पश्यन्तीत्यर्थः। ओ ते यन्ति। ओ इति आङः उणा सहैकादेशः आ उ ओ इति। उश्च पदपूरणः। यन्तीत्यपि लृडर्थे लट्। आयास्यन्ति ते, ये अपरीषु। द्वितीयार्थे सप्तम्येषा। अपराः पश्चिमाः। आगामिकाला इत्यर्थः पश्यान् द्रक्ष्यन्ति। अतीतैर्वर्त्तमानैरागामिभिश्च सर्वैर्मनुष्यैरुषा दृश्यते नास्मदादिवत् कैश्चिदेव इति समस्तार्थः ॥ ११ ॥

१२

**यावयद्द्वेषा ऋतपा ऋतेजाः सुम्नावरी सूनृता ईरयन्ती।**
**सुमङ्गलीर्बिभ्रती देववीतिमिहाद्योषः श्रेष्ठतमा व्युच्छ ॥**

❀ ज्योत्स्ना ❀ [अन्वयः] हे उषः! यावयद्द्वेषाः ऋतपाः ऋतेजाः सुम्नावरी सूनृता ईरयन्ती सुमङ्गलीः देववीतिं बिभ्रती श्रेष्ठतमा (त्वं) इह अद्य व्युच्छ।

[हिन्दी] *उषा के कर्तव्य*—हम लोगों से अलग किए गए राक्षसों से द्वेष करनेवाली, यज्ञका पालन करनेवाली, यज्ञ के लिए उत्पन्न, सुखी, पशुपक्षि आदिकों की वाणी को प्रेरण करती हुई, मङ्गलमयी और देवताओं के इच्छित यज्ञों को धारण करती हुई हे उषः! अत्यन्त प्रशस्त तुम आज यहाँ यज्ञ के समय में अन्धकार को हटावो ॥ १२ ॥

❀सा०भा०❀ **यावयद्द्वेषा** यावयन्ति अस्मत्तः पृथक्कृतानि द्वेषांसि द्वेष्टॄणि राक्षसादीनि यया सा तथोक्ता। न ह्युषसि जातायां राक्षसादयोऽवतिष्ठन्ते यतस्ते निशाचराः। **ऋतपा** ऋतस्य सत्यस्य यज्ञस्य वा पालयित्री **ऋतेजाः** यज्ञार्थं प्रादुर्भूता। सत्यामुषसि अहनि यागा अनुष्ठीयन्ते अतो यज्ञार्थं जातेत्युच्यते। **सुम्नावरी** सुम्नमिति सुखनाम तद्वती। **सूनृता** वाङ्नामैतत्। पशुपक्षिमृगादीनां वचांसि **ईरयन्ती** प्रेरयन्त्युत्पादयन्ती। **सुमङ्गली**: सौमङ्गल्योपेता। पत्या कदाचिदपि न वियुक्तेत्यर्थः। **देववीतिं** देवैः काम्यमानं यज्ञं **बिभ्रती** धारयन्ती हे **उषः श्रेष्ठतमा** उक्तेन प्रकारेणातिप्रशस्ता त्वम् **इह** अस्मिन् देवयजनदेशे **अद्य** अस्मिन् यागसमये **व्युच्छ** विवासय।

**यावयद्द्वेषाः** 'यु मिश्रणामिश्रणयोः' अस्मात् ण्यन्तात् लटः शतृ। तस्य 'छन्दसि उभयथा' इति आर्धधातुकत्वात् अदुपदेशात् लसार्वधातुकानुदात्तत्वाभावात् प्रत्ययस्वर एव शिष्यते। पुनर्बहुव्रीहौ स एव स्वरः। छान्दसः पदकालीनो ह्रस्वः। **ऋतपाः** ऋतं पाति रक्षतीति ऋतपाः। 'पा रक्षणे' विच्। **ऋतेजाः** ऋते निमित्तभूते जायते इति ऋतेजाः। 'जनी प्रादुर्भावे' 'जनसनखनक्रमगमो विट्' 'विड्वनोरनुनासिकस्यात्' इति आत्वम्। 'तत्पुरुषे कृति बहुलम्'। इति अलुक्। **सुम्नावरी** 'छन्दसी वनिपौ, इति मत्वर्थीयो वनिप्। 'वनो र च' इति ङीप् नकारस्य रेफादेशश्च। 'अन्येषामपि दृश्यते' इति दीर्घः। व्यत्ययेन प्रत्ययाद्युदात्तत्वम्। **सुमंगलीः** 'सुमंगलात् संज्ञायाम्' ( पा० ४।१।४१ ग० ) इति गौरादिषु पाठात् ङीष्। 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति 'हल्ङ्याभ्यः' इति सुलोपस्य विकल्पितत्वात् अभावे रुत्वविसर्गौ। **देववीतिम्** 'वी गतिप्रजनकान्त्यसनखादनेषु' देवैर्वीयते काम्यते इति देववीतिर्यज्ञः। कर्मणि क्तिन्। दासीभारादित्वात् पूर्वपदप्रकृतिस्वरत्वम्॥ १२॥

❀ स्क० भा० ❀ उषः इत्यामन्त्रणयोगाद् व्युच्छेति मध्यमपुरुषयोगात् प्रत्यक्षकृतोऽयं मन्त्रः। यावयद्द्वेषा इत्यादीनि च नामन्त्रितानि।

अतो यत्तच्छब्दावध्याहृत्यैकवाक्यता नेया। यावयद्द्वेषा। यौतिरत्र पृथग्भावार्थः। द्वेषशब्दोऽपि द्वेष्यत्वान्नक्तञ्चरान् रक्षआदीनाह। द्वेषाणां यावयित्री यावयद्द्वेषा, राजदन्तत्वात् परनिपातः। द्वेषाणां नक्तंचराणां रक्षआदीनां पृथग्भावयित्री। अपनेत्रीत्यर्थः। ऋतपाः यज्ञस्य पालयित्री। यज्ञो ह्युषस्युदितायां क्रियते न रात्रौ। अतस्तस्य पालयित्रीत्युच्यते। ऋतेजाः ऋतशब्दोऽत्रादित्यवचनः। पञ्चम्याश्च स्थाने सप्तमी। आदित्याज्जनित्री। सुम्नावरी। सुम्नमिति सुखनाम। तद्वती। प्राणिनां सुखकरीत्यर्थः। तच्छब्दोऽध्याहर्तव्यः। ससूनृता वाचः ईरयन्ती प्रेरयन्ती। उषउदयोत्तरकालं हि प्राणिनां वाचः प्रवर्तन्ते। अतः सैव ताः प्रेरयन्तीति व्यपदिश्यते। सुमंगलीः सुष्ठु मंगल्या सती। बिभ्रती धारयती। देववीतिं देवकामम्। देवानस्मदीयहविःकामान् कुर्वन्तीत्यर्थः। इहास्मदीये यज्ञे अद्य हे उषः श्रेष्ठतमा अतिशयेन प्रशस्या व्युच्छ तमांसि विवासय ॥ १२ ॥

## १३

**शश्वत्पुरोषा व्युवास देव्यथो अद्येदं व्यावो मघोनी।**
**अथो व्युच्छादुत्तराँ अनु द्यूनजरामृता चरति स्वधाभिः॥**

❀ ज्योत्स्ना ❀ [ अन्वयः ] देवी उषाः पुरा शश्वत् व्युवास। अथो अद्य मघोनी इदं व्यावः। अथो उत्तरान् द्यून् अनु व्युच्छात्। अजरा अमृता स्वधाभिः चरति।

[ हिन्दी ] *कर्तव्य दृढता*—दीप्तिमती उषा पहिले निरन्तर अन्धकार को दूर करती रही है। और आज भी धनवती यह उषा अन्धकार हटाकर जगत् को प्रकाशित करती है। और यह उषा भावी दिवसों के लक्ष्य से भी अन्धकार हटाती है इस प्रकार भूत-भविष्य वर्तमान में रहने के कारण अजर अमर यह उषा अपनी कान्ति से चल रही है ॥ १३ ॥

❀ सा० भा० ❀ देवी देवनशीला उषाः पुरा पूर्वस्मिन् काले

शश्वत् नित्यं सततं व्युवास व्यौच्छत् । अथो अनन्तरम् अद्य अस्मिन् काले मघोनी धनवती उषाः तमसा तिरोहितं इदं सर्वं जगत् व्यावः विवासितं प्रकाशनेन तमसा वियुक्तमकरोत् । अथो अनन्तरम् उत्तरान् उर्ध्वतरान् भाविनः द्यून् दिवसान् अनुलक्ष्य आगामिष्वपि दिवसेषु व्युच्छात् व्युच्छति विवासयति । अतः कालत्रयव्यापिनी सोषाः अजरा जरारहिता सर्वदैकरूपा अमृता मरणरहिता च सती स्वधाभिः आत्मीयैस्तेजोभिः सह चरति वर्तते ।

उवास 'वस निवासे' 'लिट्यभ्यासस्योभयेषाम्' इति अभ्यासस्य संप्रसारणम् । आवः तस्मादेव धातोर्लङि 'बहुलं छन्दसि' इति विकरणस्य लुक् । 'हल्ङ्याब्भ्यः' इति तिलोपः । 'छन्दस्यपि दृश्यते' इति आडागमः । उच्छात् लेटि आडागमः । उत्तरान् 'दीर्घादटि समानपदे' इति नकारस्य रुत्वम् 'आतोऽटि नित्यम्' इति सानुनासिकः आकारः । अनु 'अनुर्लक्षणे' ( पा० १।४।८४ ) इति अनोः कर्मप्रवचनीयत्वम् । अजरा अमृता तत्र बहुव्रीहौ 'नञो जरमरमित्रमृताः' इति उत्तरपदाद्युदात्तत्वम् ॥ १३ ॥

❀ स्क० भा० ❀ एतस्मादित्येतत्समानार्थोऽथोशब्दः । तच्छ्रुतेर्यस्मादित्यध्याहार्यम् । शश्वत् बहून् नित्यं वा । पुरा पूर्वेष्वपि कालेषु । उषा देवी व्युवास । वसिरत्रान्तर्णीतण्यर्थः । तमांस्यस्मदीये कर्मणि विवासितवती । अथो एतस्मात् कारणात् । प्रसादत्वात् कारणात् । अद्यास्मदीये कर्मणि व्यावः विवृणोतु विवृतवती वा । प्रकाशितवती वेत्यर्थः । मघोनी धनवती । अथो एतस्मादेव कारणात् व्युच्छात् । आशिष्ययं लिङर्थे लेट् । विवासयेत्, तमांस्यस्मदीये कर्मणीत्याशास्महे । उत्तरान् अनु द्यून् । अनुशब्दोऽत्र 'लक्षणेत्थंभूताख्यान' (पा० १।४।९०) इत्येवं कर्मप्रवचनीयः प्रतिशब्दस्य समानार्थः । द्यु इति अहर्नाम । उत्तराण्यहानि प्रति, आगामिन्यपि काल इत्यर्थः । कीदृशी । उच्यते । अजरा जरावर्जिता । अमृता मरणवर्जिता । चरति सर्वत्र गच्छति । स्वधाभिः । स्वधाशब्दोऽत्र

सामर्थ्यात् ज्योतिर्वचनः। स्वैः ज्योतिर्भिः। सर्वं ज्योतिर्भिर्व्याप्नोतीत्यर्थः। अथवा स्वधेत्यन्ननाम। हविर्लक्षणैरन्नैर्निमित्तभूतैर्गच्छति। हवींष्युपभोक्तुं यज्ञेषु गच्छतीत्यर्थः॥ १३॥

१४

व्य १ ञ्जिभिर्दिव आतास्वद्यौदप कृष्णां निर्णिजं देव्यावः।
प्रबोधयन्त्यरुणेभिरश्वैरोषा याति सुयुजा रथेन॥

* ज्योत्स्ना * [अन्वयः] दिवः आतासु अञ्जिभिः वि अद्यौत्। देवी कृष्णां निर्णिजम् अप आवः। अरुणेभिः अश्वैः सुयुजा रथेन प्रबोधयन्ती उषाः आ याति।

[ हिन्दी ] *उषा का आगमन*—आकाश की विस्तृत दिशाओं में अपने तेज से उषा अन्धकार हटाकर चमक रही है। दीप्तिमती उषा ने कृष्ण रूपा रात्रि के रूप–अन्धकार–को हटा दिया है। और अपने लाल घोड़े से युक्त रथ के द्वारा सोते हुए प्राणियों को जगाती हुई उषा आ रही है॥ १४॥

* सा० भा० * **दिवः** नभसः संबन्धिनीषु **आतासु** दिङ्नामैतत्। आततासु विस्तीर्णासु दिक्षु उषा **अञ्जिभिः** व्यंजकैः प्रकाशकैः तेजोभिः **वि अद्यौत्** विद्योतते प्रकाशते। सैषा **देवी** देवनशीला **कृष्णां निर्णिजम्** निर्णिगिति रूपनाम। रात्रिकृतं कृष्णं रूपम् **अप आवः** अपावृणोत्। प्रकाशेन तिरस्कृतवती। अपि च **अरुणेभिः** अरुणैः लोहितवर्णैः **अश्वैः** व्यापनशीलैः स्वकीयैः किरणैस्तुरगैर्वा **सुयुजा** सम्यक्युक्तेन **रथेन उषाः आ याति** आगच्छति। किं कुर्वती। **प्रबोधयन्ती** सुप्तान् प्राणिनः प्रबुद्धान् कुर्वती।

**अद्यौत्** 'द्युत दीप्तौ' लुङ्। 'द्युद्भ्यो' लुङि (पा० १।३।९१) इति परस्मैपदम्। व्यत्ययेन च्लेर्लुक्। गुणे प्राप्ते वृद्धिश्छान्दसी। यद्वा।

'द्यु अभिगमने' आदादिकः 'उतो वृद्धिर्लुकि हलि' ( पा० ७।३।८९ ) इति वृद्धिः ॥ १४ ॥

❀ स्क० भा० ❀ विशब्दः अद्यौदित्याख्यातेन सम्बन्धयितव्यः। अञ्जिभिरित्यञ्जिशब्दो व्यक्तिरूपत्वात् ज्योतिर्वचनः। ततो ज्योतिर्भिः दिवः अवयवभूतासु आतासु............दिक्षु। व्यद्यौत् विविधं द्योतते। किं च कृष्णां निर्णिजम्। कृष्णामिति षष्ठ्याः स्थाने व्यत्ययेन द्वितीया। निर्णिगित्यपि रूपनाम। कृष्णवर्णायाः रात्रेः संबन्धिनमेवंलक्षणं रूपम्। आवः आवृणोति। अपनयतीत्यर्थः। किं च सुप्तान् प्राणिनः प्रबोधयन्ती। अरुणेभिः अरुणवर्णैरश्वैः। सुयुजा सुयुक्तेन रथेन। ओषा याति आगच्छत्युषाः ॥ १४ ॥

१५

आवहन्ती पोष्या वार्याणि चित्रं केतुं कृणुते चेकिताना।
ईयुषीणामुपमा शश्वतीनां विभातीनां प्रथमोषा व्यश्वैत् ॥

❀ ज्योत्स्ना ❀ [ अन्वयः ] पोष्या वार्याणि आवहन्ती, चेकिताना उषाः चित्रं केतुं कृणुते। ईयुषीणां शश्वतीनां उपमा, विभातीनां प्रथमा वि अश्वैत्।

[ हिन्दी ] उषा से पोषण—यावज्जीवन पोषण करने वाले तत्वरूप धनों को हमारे लिए लाती हुई, प्रत्येक मनुष्य को जनाती हुई, उषा, आश्चर्यावह प्रभात स्वरूप ध्वज को करती है। यह उषा आने-जाने वाले व्यक्तियों के लिए शाश्वत आदर्श स्वरूप है, और प्रकाशक ज्योतियों में प्रमुख यह उषा तेज (प्रकाश) से चमचमाती है ॥१५॥

❀ सा० भा० ❀ देवीनां हविःषु 'आवहन्ती' इत्येषा उषसो याज्या। सूत्रितं च—'आ द्यां तनोषि रश्मिभिरावहन्ती पोष्या वार्याणि, न ता अर्वा रेणुककाटो अश्नुते' ( आश्व० श्रौ ०६।१४ ) इति।

**पोष्या** यावज्जीवं पोषणसमर्थानि **वार्याणि** वरणीयानि धनानि **आवहन्ती** अस्मभ्यमानयन्ती **चेकिताना** सर्वं जनं प्रज्ञापयन्ती **उषाः** **चित्रं** विचित्रमाश्चर्यभूतं चायनीयं वा **केतुं** प्रज्ञापकं रश्मिं कृत्स्नजगत् प्रकाशनसमर्थं **कृणुते** स्वात्मनः प्रकाशात् कुरुते। सैषा **ईयुषीणां** गमनवतीनां पूर्वनिष्पन्नानां **शश्वतीनां** बह्वीनामुषसां **उपमा** उप समीपे निर्मितोपमानभूता वा **विभातीनां** विशेषेण प्रकाशमानानामागामिनीनाम् उषसां **प्रथमा** आद्या एवं भूतोषाः **व्यश्वैत्** तेजसा प्रवृद्धासीत्।

**पोष्या** 'पुष पुष्टौ। पोषणं पोषः। भावे घञ्। तत्र भवानि 'भवे छन्दसि' इति यत्। 'यतोऽनावः' इत्याद्युदात्तत्वम्। 'शेश्छन्दसि बहुलम्' इति शेर्लोपः। **वार्याणि** 'वृङ् संभक्तौ' 'ऋहलोर्ण्यत्।' 'ईडवन्दवृशंसदुहां ण्यतः' इत्याद्युदात्तत्वम्। **चेकिताना** 'कित ज्ञाने' अस्मात् यङन्तात् लटः शानच् 'छन्दस्युभयथा' इति तस्य आर्धधातुकत्वात् अतोलोपयलोपौ 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम्। **ईयुषीणाम्** 'इण् गतौ' लिटः क्वसुः, द्विर्भावादि 'उगितश्च' इति ङीप्। 'वसोः संप्रसारणम्' 'इणो यण्' इति यणादेशः। 'दीर्घ इणः किति' इति अभ्यासस्य दीर्घत्वम् 'शासिवसिघसीनां च' इति षत्वम्। ङीप्सुपौ पित्वादनुदात्तौ। **विभातीनाम्** 'भा दीप्तौ' अस्मात् शत्रन्तात् पूर्ववत् ङीप्। 'ङ्याश्छन्दसि बहुलम्' इति नाम उदात्तत्वम्। **अश्वैत्** 'टुओश्वि गतिवृद्ध्योः'। लङि 'बहुलं छन्दसि' इति विकरणस्य लुक् गुणे कृते व्यत्ययेन ऐत्वम्॥ १५॥

❀ स्कं० भा० ❀ आवहन्ती आनयन्ती स्तोतॄणाम् यष्टॄणां चार्थाय। स्तोतृभ्यो यष्टृभ्यश्च ददातीत्यर्थः। पोष्या पोषणसमर्थानि धनानि। वार्याणि वरणीयानि। अत्यन्तोत्कृष्टानीत्यर्थः। चित्रं विचित्रं पूज्यं वा। केतुं प्रज्ञानं प्रकाशाख्यम्। कृणुते करोति। चेकिताना ज्ञायमाना। दृश्यमानैवेत्यर्थः। किं च ईयुषीणामुपमा, शश्वतीनां शश्वदिति बहुनाम, निर्धारणे चोभयत्र षष्ठी। गन्त्रीणां बह्वीनां मध्ये उपमानभूता अत्यन्तोत्कृष्टेत्यर्थः। किञ्च। विभातीनां प्रथमा। भा दीप्तौ। दीप्यमानानां मध्ये प्रथमा उत्कृष्टा उषा

व्यश्वैत् श्वयतेर्गत्यर्थस्य वृद्धयर्थस्य वेदं रूपम्। विविधं सर्वत्र गच्छति वर्धते वा ॥ १५ ॥

[ इति उषःसूक्ते तृतीयो वर्गः ]

१६

**उदीर्ध्वं जीवो असुर्न आगादप प्रागात्तम आ ज्योतिरेति।**
**आरैक्पन्थां यातवे सूर्यायागन्म यत्र प्रतिरन्त आयुः ॥**

*ज्योत्स्ना* [अन्वयः] (हे मनुष्याः !) उदीर्ध्वं, नः असुः जीवः आगात्। तमः अप प्रागात्। ज्योतिः आ एति। सूर्याय यातवे पन्थाम् आरैक्। अगन्म, यत्र आयुः प्रतिरन्ते।

[ हिन्दी ] उषःकाल का जगना और आयु—हे मनुष्यो! पलंग छोड़कर खड़े हो जाओ। अब हमारा शरीर का प्रेरक जीव आगया है। अन्धकार चला गया है। हमारे में ज्योति (प्रकाश) आ रहा है। उषः कालनें सूर्यको जाने के लिए रास्ता दे दिया है। वहाँ चलो जहां आयु (या अन्न) बढ़ाया जाता है ॥ १६ ॥

* सा० भा० * हे मनुष्याः! उदीर्ध्वं शयनं परित्यज्य उद्गच्छत। नः अस्माकं असुः शरीरस्य प्रेरयिता जीवः जीवात्मा आगात् आगतवान्। तमः अप प्रागात् अपक्रान्तम्। उषसः प्रकाशे सति सर्वजीवनव्यापारयोगः तस्मात् परमात्मरूपतया स च जीवस्तदेव ज्योतिः आ एति आगच्छति। सूर्याय सूर्यस्य पन्थां मार्गं आरैक् विवक्तीकरोति। यातवे गमनाय। तस्मिन् देशे अगन्म गच्छामः यत्र यस्मिन् देशे आयुः। अन्ननामैतत्। अन्नं प्रतिरन्ते। प्रपूर्वस्तिरतिर्वर्धनार्थः। उदारा दानेन प्रवर्धयन्ति।

ईर्ध्वम् 'ईर् गतौ'। आदादिकोऽनुदात्तेत्। अरैक् 'रिचिर् विरेचने' लङि 'बहुलं छन्दसि' इति विकरणस्य लुक्। गुणे व्यत्ययेन

ऐत्वम्। पन्थाम् द्वितीयायामपि 'पथिमथ्यृभुक्षामात्' इति व्यत्ययेन आत्वम्। अगन्म गमेर्लङि 'बहुलं छन्दसि' इति विकरणस्य लुक्। 'म्वोश्च' ( पा० ८।२।६५ ) इति मकारस्य नकारः ॥ १६ ॥

* स्क० भा० * 'ईर गतौ' ऋत्विजां वायं प्रैषः पुत्रपौत्रप्रभृतीनां वा। ऊर्ध्वं गच्छत यष्टुं स्तोतुं च। शयनेभ्यः उत्तिष्ठतेत्यर्थः। किं कारणम्। उच्यते। यस्माज्जीवः जीवितस्थानीया। असुः, असुरिति प्राणनाम। प्राणस्थानीया च, नः अस्माकमागात्। आ इत्येष उदित्येतस्य स्थाने। उद्गता। का। प्रकृतत्वादुषाः। यस्माज्जीवितात् प्राणेभ्यश्च प्रियतमा अस्माकमुषा उदितेत्यर्थः। उद्गतायां च तस्यामपप्रागात्तमः। अप प्रेति व्यत्यासेनोपसर्गौ योजयितव्यौ। आगादित्यपि च वर्त्तमानकाले लुङ्प्रत्ययो द्रष्टव्यः 'छन्दसि लुङ्लङ्लिटः' ( पा० ३।४।६ ) इति। प्रकर्षेणापगच्छति शार्वरं तमः। आ ज्योतिरेति ज्योतिश्च उषसः प्रकाशाख्यं सर्वत्र आ एति आगच्छति। सर्वं व्याप्नोतीत्यर्थः। एतय च आरैक् पन्थां रेचयति पन्थानम्। यातवे गन्तुम् सूर्याय सूर्यार्थम्। सूर्यो गमिष्यतीत्येवमर्थमित्यर्थः। केन पुनर्व्यापारेण औषसं ज्योतिः सूर्यस्य पन्थानं रेचयति। आत्मापगमनेन। कुत एतत्। औषसस्य ज्योतिषोऽन्ते सूर्योदयदर्शनात्। यस्माच्चागन्म गता प्राप्ता वयम्। क। उच्यते। यत्र व्यवस्थिताः अध्वर्यादय ऋत्विजः प्रतिरन्ते वसतीवर्येकचनादिभिः प्रवर्धयन्त्यायुः। अन्ननामैतत्। सोमादिहविर्लक्षणमन्नम्। यस्मादुषा उदिता वयमपि यज्ञं कर्तुं प्रवृत्ता इत्यर्थः ॥१६॥

१७

**स्यूमना वाच उदियर्ति वह्निः स्तवानो रेभ उषसो विभातीः।**
**अद्या तदुच्छ गृणते मघोन्यस्मे आयुर्नि दिदीहि प्रजावत्॥**

*ज्योत्स्ना* [अन्वयः] वह्निः रेभः उषसो विभातीः स्तवानः वाचः स्यूमना उदियर्ति। हे मघोनि! अद्य गृणते तत् उच्छ। अस्मे प्रजावत् आयुः नि दिदीहि।

[ हिन्दी ] वैदिक स्तुति और प्रार्थना—स्तुतिवचनों को वहन (याद) करने वाला यह स्तोता उषः काल की शोभा को स्तुति करता हुआ वेदवचनों से सिले हुए ( संबन्धित ) वाक्यों को बोलता है । हे धनवति ! उषः ! आज स्तुति करने वाले के दृष्टि निरोधक अज्ञान को हटा दो । और हमें पुत्र पौत्रादिसंपन्न आयु ( या अन्न ) देओ ॥ १७ ॥

* सा० भा० * **वह्निः** स्तोत्राणां वोढा । **रेभः** स्तोतृनामैतत्, स्तोता । **उषसो विभातीः** तमसोऽपनोदनेन प्रकाशमाना उषो देवताः **स्तवानः** स्तुवन् **वाचः** वेदरूपायाः संबन्धीनि **स्यूमना** स्यूमानि अनुस्यूतानि संततानि उक्थानि **उदियर्ति** उद्गमयति उच्चारयति । अतो हे **मघोनि** ! मघवति उषः **अद्य** अस्मिन् समये **गृणते** स्तुवते तस्मै पुरुषाय **तदुच्छ** दृष्टिनिरोधकतया प्रसिद्धं नैशं तमो विवासय वर्जय । **अस्मे** अस्मभ्यं च **प्रजावत्** प्रजाभिः पुत्रपौत्रादिभिर्युक्तम् **आयुः** अन्नं **नि दिदीहि** नितरां प्रकाशय 'दीदेतिश्छान्दसो दीप्तिकर्मा' प्रयच्छेत्यर्थः ।

**स्यूमना** 'षिवु तन्तुसन्ताने' 'अन्येभ्योऽपि दृश्यन्ते' इति दृशिग्रहणस्य सर्वोपाधिव्यभिचारार्थत्वात् कर्मणि मनिन् 'छ्वोः शूठ्' इति ऊठ् । 'आङ्याजयारां चोपसङ्ख्यानम्' ( पा० ७।१।३९ वा० ) इति विभक्तेः आङादेशः । यद्वा-औणादिको भावे मक् । पामादिलक्षणो मत्वर्थीयो नः । बन्धनयुक्तानि इत्यर्थः । 'शेश्छन्दसि बहुलम्' इति शेर्लोपः । व्यत्ययेनाद्युदात्तत्वम् । **वाचः** 'सावेकाचः' इति ङस उदात्तत्वम् । इयर्त्ति 'ऋ गतौ' जौहोत्यादिकः 'अर्तिपिपर्त्योश्च' इति अभ्यासस्य इत्वम् । **स्तवानः** 'ष्टुञ् स्तुतौ' शानचि अदादित्वात् शपो लुक् । तस्य 'छन्दस्युभयथा' इति आर्धधातुकत्वेन ङित्वाभावात् गुणावादेशौ । व्यत्ययेनाद्युदात्तत्वम् । **विभातीः** 'शतुरनुमो नद्यजादी' इति ङीप उदात्तत्वम् । **गृणते** 'गॄ शब्दे' क्रैयादिकः 'प्वादीनां ह्रस्वः' पूर्वोक्तेन

सूत्रेण विभक्तेरुदात्तत्वम् । अस्मे 'सुपां सुलुक्' इति चतुर्थ्याः शेआदेशः ॥ १७ ॥

* स्क० भा० * अद्य। तदुच्छेति तच्छब्दश्रुतेर्यच्छब्दोऽत्राध्याहर्तव्यः। यस्मात् स्यूमना। स्यूमशब्दोऽत्र सुखवचनः। सुखेनाक्लेशेन। स्तुतिलक्षणा वाचः। उदियर्ति 'ऋ गतौ' सामर्थ्याच्चात्रान्तर्णीतण्यर्थः। आत्मन एवायं परोक्षरूपेण प्रथमपुरुषेण व्यपदेशः। होत्राख्यं ऋत्विक् कुत्सनामा वा ऋषिः उद्गमयति उच्चारयतीत्यर्थः। बलवान् वह्निरुच्यते वहनसमर्थत्वात्। स्तवानः स्तुवन्। रेभः स्तोतृनामैतत्। स्तोता च। किं स्तुवन्। उच्यते। यस्मादुषसो विभातीः विविधं दीप्यमानाः। अद्या तदुच्छ, तदिति पंचम्या लुग्द्रष्टव्यः। तस्मादद्य व्युच्छ विविधं तमांसि विवासय। गृणते स्तुवतो ममार्थाय। हे मघोनि धनवति। किंचास्मे अस्मभ्यम्। आयुश्चिरंजीवित्वमन्नं वा निदिदीहि। ददातेरेतद्रूपम्, नियमेन देहि। प्रजावत् प्रजासहितम् ॥ १७ ॥

१८

**या गोमतीरुषसः सर्ववीरा व्युच्छन्ति दाशुषे मर्त्याय।**
**वायोरिव सूनृतानामुदर्के ता अश्वदा अश्नवत्सोमसुत्वा ॥**

* ज्योत्स्ना * [ अन्वयः ] दाशुषे मर्त्याय गोमतीः सर्ववीराः याः उषसः व्युच्छन्ति। वायोः इव सूनृतानाम् उदर्के अश्वदाः ताः सोमसुत्वा अश्नवत्।

[ हिन्दी ] उषः काल में गोसेवा और कसरत—हविष देनेवाले मनुष्य के लिए गौवों से युक्त, सबसे टक्कर लेनेवाले वीरों से युक्त जो उषाएँ अन्धकार हटाती हैं, वे वायु की भाँति जल्दी पढी जाने वाली स्तुति स्वरूप वचनों को समाप्ति में अश्व देने वाली होकर सोमयाग करने वाले यजमान को प्राप्त होवें। अर्थात् हमें सर्वदा सुप्रभात और मङ्गल प्राप्ति होवे ॥ १८ ॥

❀ सा० भा० ❀ **दाशुषे** हवींषि दत्तवते **मर्त्याय** मनुष्याय यजमानाय **गोमतीः** गोमत्यो बहुभिर्गोभिर्युक्ताः **सर्ववीराः** सर्वैः सरणसमर्थैः वीरैः शूरैर्युक्ताः **याः उषसः व्युच्छन्ति** तमो वर्जयन्ति । **वायोरिव** वायुवच्छीघ्रं प्रवर्तमानानां **सूनृतानां** स्तुतिरूपाणां वाचाम् **उदर्के** समाप्तौ **अश्वदाः** अश्वानां दात्रीः **ताः** उषसः **सोमसुत्वा** सोमानामभिषोता यजमानः **अश्नवत्** व्याप्नोतु ।

**दाशुषे** 'दाशृ दाने' 'दाश्वान् साह्वान्' इति क्वसुप्रत्ययान्तो निपात्यते । चतुर्थ्येकवचने 'वसोः संप्रसारणम्' इति संप्रसारणम् । 'शासिवसिघसीनां च' इति षत्वम् । **अश्नवत्** 'अशू व्याप्तौ' व्यत्ययेन परस्मैपदम् । लेटि अडागमः । 'इतश्च लोप' इति इकारलोपः । सोमसुत्वा 'षुञ् अभिषवे' 'अन्येभ्योऽपि दृश्यन्ते' इति क्वनिप् 'ह्रस्वस्य पिति' इति तुक् ॥ १८ ॥

❀ स्क० भा० ❀ या गोमतीः अरुणीभिः स्वाभिर्गोभिः गोमत्यः । उषसः सर्ववीराः सर्वैर्वीरैरुपेताः । अखण्डिताशेषपरिजनपुत्रपौत्रादिका इत्यर्थः । व्युच्छन्ति विविधं तमांसि वित्रासयन्ति । दाशुषे मर्त्याय । दाश्वानिति यजमाननाम शाकपूणिना पठितम्, तादर्थ्ये चोभयत्र चतुर्थी । यजमानस्य मनुष्यस्यार्थाय । कस्यां वेलयाम् उच्यते । वायोरिव सूनृतानामुदर्के । सूनृतेत्यपठितमपि वाङ्नाम । उदर्क इत्युद्भव उच्यते । यादृग्वायोः······ उद्भवः·········कादिवाचां उद्भवे । प्रभातवेलायामित्यर्थः । तदा········· कादिवाचामुद्भवः ता अश्वदाः स्तोतृभ्यो यष्टृभ्यश्चाश्वान् दात्रीः । अश्नवद् व्याप्नोति । केन सामर्थ्यात् स्तुतिभिर्हविर्भिश्च स्तौति यजति चेत्यर्थः । सोमसुत्वा सोमाभिषवकारी यजमानः । अथवा दक्षिणादाने अश्वस्यापि दानविधानात् अश्वदा इति सोमसुत्वनो विशेषणं नोषसाम् । अश्वस्य दाता यजमान इति ॥ १८ ॥

१९

**माता देवानामदितेरनीकं यज्ञस्य केतुर्बृहती वि भाहि ।**
**प्रशस्तिकृद् ब्रह्मणे नो व्यु१च्छा नो जने जनय विश्ववारे ॥**

❀ ज्योत्स्ना ❀ [ अन्वयः ] देवानां माता, अदितेः अनीकम्, यज्ञस्य केतुः बृहती वि भाहि। प्रशस्तिकृत् नः ब्रह्मणे व्युच्छ। हे विश्ववारे! नः जने आ जनय।

[ हिन्दी ] जानकार और नागरिक बनने की प्रार्थना—हे उषः! तुम देवताओं की माता, अदिति देवमाता की प्रतिस्पर्धिनी यज्ञ की जनाने वाली महत्वशालिनी होकर प्रकाशित होओ। 'अच्छी स्तुति किया' इस तरह प्रशंसा करती हुई तुम हमारी मन्त्ररूप स्तुति के लिए अज्ञान हटाओ। हे सर्वजन इच्छिते उषः! हमें मनुष्यों में प्रधान नागरिक बनाओ ॥ १९ ॥

❀ सा० भा० ❀ हे उषस्त्वं देवानां माता जननी। उषसि सर्वे देवाः स्तुत्या प्रबोध्यन्ते अतः सा तज्जननवती इत्युच्यते। अत एव अदितेः देवानां मातुः अनीकं प्रत्यनीकं प्रतिस्पर्धिनी त्वमित्यर्थः। यद्वा दीव्यन्तीति देवा रश्मयः, तेषां निर्मात्री। अदितेरखण्डनीयाया भूमेरनीकं मुखम्। यथेन्द्रियाश्रयत्वात् मुखं प्रकाशकम् एवमुषाः भूमेः प्रकाशयित्रीत्यर्थः। यज्ञस्य केतुः केतयित्री ज्ञापयित्री बृहती महती सती वि भाहि प्रकाशस्व। अपि च प्रशस्तिकृत् सम्यक् स्तुतमिति प्रशंसनं कुर्वती नः अस्मदीयाय ब्रह्मणे मन्त्ररूपाय स्तोत्राय व्युच्छ विवासय। तदनन्तरं हे विश्ववारे सर्वैर्वरणीये उषः नः अस्मान् जने जनपदे आ जनय आभिमुख्येन प्रादुर्भावय अवस्थापयेत्यर्थः।

बृहती 'बृहन्महतोरुपसंख्यानम्' इति ङीप उदात्तत्वम्। प्रशस्तिकृत् 'शंसु स्तुतौ' भावे क्तिन्। 'तितुत्र' इति इट्प्रतिषेधः। 'अनिदिताम्' इति नलोपः,तस्मिन्नुपपदे करोतेः 'क्विप् च' इति क्विप्। जनय 'जनी प्रादुर्भावे' णिचि उपधा वृद्धिः 'जनीजॄष्क्नसुरञ्जोऽमन्ताश्च' इति मित्वे मितां ह्रस्वः' इति ह्रस्वत्वम् ॥ १९ ॥

❀ स्क० भा० ❀ विभाहि इति मध्यमपुरुषसंयोगात् प्रत्यक्षकृतोऽयं मन्त्रः। मातेत्यादीनि च नामन्त्रितानि। अतो यत्तच्छब्दावध्याहृत्यैकवाक्य-

-तया योज्यानि । या त्वं माता । कस्य देवानाम् । देवशब्देनादित्या उच्यन्ते । तेषां हि माता उषाः । तत् 'रुशद्वत्सा रुशती' ( ऋ० १।११३।२ ) इत्यत्र व्याख्यातम् । प्रतिमासं चादित्यभेदमङ्गीकृत्य बहुवचनम् । अदितेरनीकम् । अदितिशब्देनात्रादीनत्वात् समग्रज्योतिरुच्यते । अनीकशब्दोऽपि ब्राह्मणानीकं क्षत्रियानीकमिति प्रयोगदर्शनात् समूहवचनः । अदीनस्य समग्रस्य प्रकाशाख्यस्य ज्योतिषः समूहः । अथवा अनीकशब्दः खड्गमुखवचनः । इहाग्रत्वसामान्यादुषसि प्रयुज्यते । अदीनस्य समग्रस्याहर्लक्षणस्य ज्योतिषो मुखभूतेत्यर्थः । यज्ञस्य केतुः 'कित ज्ञाने' इत्यस्य सामर्थ्यादन्तर्णीतण्यर्थस्य रूपम् । यज्ञस्य ज्ञापयित्री । प्रकाशयित्रीत्यर्थः । बृहती महती । तच्छब्द इदानीमध्याहर्तव्यः । सा विभाहि विविध दीप्यस्व । किं च या त्वं प्रशस्तिकृत् प्रशस्तयः स्तुतय उच्यन्ते । तासां कर्त्री । उषसि ह्युदितायां स्तुतयः क्रियन्ते । तद्धेतुत्वात् सैव तत्र कर्त्रीति व्यपदिश्यते । ब्रह्मणे नः । ब्रह्मणे इति तादर्थ्ये चतुर्थी । अस्माकं संबन्धिनः स्तुतिलक्षणस्य ब्रह्मणोऽर्थाय । व्युच्छ विविधं तमांसि विवासय । वयं स्तुतीः करिष्याम इत्येवमर्थं तमांस्यपनयेत्यर्थः । किं च आ नो जने जनय । आ इत्येष उपेत्येतस्य स्थाने जन इति लोक उच्यते । निर्धारणे च सप्तमी । लोकस्य मध्ये । अस्मानुपजनय धनादिभिर्वर्धय । हे विश्ववारे सर्वस्य वरणीये ॥ १९ ॥

२०

यच्चित्रमप्न उषसो वहन्तीजानाय शशमानाय भद्रम् ।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः॥

❀ ज्योत्स्ना ❀ [ अन्वयः ] चित्रम् अप्नः यत् उषसः वहन्ति (तत्) ईजानाय शशमानाय भद्रं (भवति) । तत् नः मित्रः वरुणः अदितिः सिन्धुः पृथिवी उत द्यौः ममहन्ताम् ।

[ हिन्दी ] धन की प्राप्ति—प्रशंसनीय प्राप्तव्य जो धन उषाएँ ले आती हैं वह धन यज्ञकर्ता तथा स्तुतिकर्ता यजमान को

अच्छे रूप से हो जाता है अर्थात् बहुत मिल जाता है। उस धन को हमारे लिए मित्र वरुण अदिति सिन्धु पृथिवी और द्यु देवता मानें अर्थात् देने की अनुमति देवें ॥ २० ॥

❀ सा० भा० ❀ चित्रं चायनीयं अप्नः आसव्यं यत् धनम् उषसो वहन्ति आनयन्ति ईजानाय हविर्भिः इष्टवते शशमानाय स्तुतिभिः संभजमानाय पुरुषाय भद्रं भजनीयं तत् भवतीति शेषः। यदनेन सूक्तेनास्माभिः प्रार्थितं तत् मित्रादयः षड्देवताः ममहन्तां पूजितं कुर्वन्तु। अप्नः 'आप्लृ व्याप्तौ' 'आपः कर्माख्यायां ह्रस्वो नुट् च वा' इति बहुलग्रहणात् अकर्माख्यायामपि असुन् धातोर्ह्रस्वो नुडागमश्च। ईजानाय यजतेश्छन्दसि लिट्। 'लिटः कानज्वा' 'वचिस्वपि' इत्यादिना संप्रसारणम्, द्विर्वचनादि। शशमानाय 'शश प्लुतगतौ'। ताच्छीलिकश्चानश्। तस्य लसार्वधातुकत्वाभावात् अदुपदेशात् लसार्वधातुकस्वराभावे चित्स्वर एव शिष्यते ॥ २० ॥

❀ स्क० भा० ❀ यच्चित्रं विचित्रं पूज्यं वा अप्नः कर्मनामैतत्। यागलक्षणं कर्म प्रति उषसः वहन्ति प्रापयन्ति। किम्। सामार्थ्यादास्मानं गच्छन्तीत्यर्थः। किमर्थम्। ईजानाय शशमानाय। शशमान इत्यर्चतिकर्मा तादर्थ्ये चोभयत्र चतुर्थी। यजतः स्तुवतश्चार्थाय। कीदृशं कर्म प्रति। भद्रं कल्याणम्। तन्नो मित्र इत्याद्युक्तार्थम् ॥ २० ॥

[ इति उषःसूक्ते चतुर्थो वर्गः ]

## सूक्तसार

❀ ज्योत्स्ना ❀ इस उषःसूक्त में उषःकाल के वर्णन के साथ ही मनुष्यों के लिए उसके उपयोगका सुन्दर आदेश दिया गया है। इन मन्त्रों में प्राकृतिक वर्णन बहुत ही रोचकता और भावुकता से किया गया है। इस सूक्तद्वारा ज्ञात होता है कि—उषा अपने कार्य में अविचल है। यह अपने प्राचीन उषाओं का ही अनुगमन करती है। उषा का समय थोड़ा ही है पर वही महत्वपूर्ण है। आज की उषा में भूत और भविष्यत

की कामनाओं का असर रहा करता है अतः सर्वदा सचेष्ट होकर कार्य करना चाहिए। क्योंकि जिन्होनें बीती उषाओं को देखा वे चल बसे, आज के दिन को देखनेवाले हम भी चले जायगें। और हमारे आगे वाली उषाओं के देखने वाले भी अवश्य जायगें। अतः इस अस्थिर जीवन में हम तामस भावों को हटाने वाली मङ्गलमयी उषा के समय में विचार करके अपने अज्ञान को हटावें। उषःकाल का विचार पहिले भी अज्ञान हटाता था, आज भी हटाता है, और भविष्य में भी हटाएगा।

उषा ने रात्रि से स्थान प्राप्त किया है, तो इसने सूर्य को अपना स्थान देकर आदान-प्रदान का प्राकृतिक उदाहरण उपस्थित कर रखा है। यहाँ के वैदिक वर्णन नें अत्यन्त तेजस्वी सूर्य को इससे स्थान दिलाकर, इसके ओस या कोहरेरूप दूध को पिलाकर इसका बालक बताया है। और उषा को अपने बच्चे सूर्य के आश्रित होकर, अपनी जननी रात्रि के ही मार्ग पर आरूढ होने और रात्रि के परस्पर सहज विरोधी अन्धकार स्वरूपा होने पर भी बिना किसी हिंसाभाव के सर्वदा रात्रि का ही अनुगमन करती हुई बतला कर कृतज्ञता और सौजन्य का सुदृढ़ पाठ पढ़ाया है। उषः काल के प्रकाश को सर्वश्रेष्ठ बताया गया है क्योंकि—सूर्य तीक्ष्ण है। चन्द्रमा का सर्वदा स्पष्ट प्रकाश नहीं रहता। ग्रह नक्षत्र ताराएँ अपने रूप से चमकती हैं, पर उसके प्रकाश का सर्वसाधारण के लिए उपयोग नहीं किया जा सकता है, अतएव उषः काल का प्रकाश शीतल-मन्द-उपयोगी तथा सुहावना होने के कारण सर्वश्रेष्ठ है। इसमें पक्षी भी आनन्द से चह-चहा उठते हैं। अच्छी वायु चलती है इस लिए दरवाजे खोल दिए जाते हैं। और यह उषा समस्त विश्व में व्याप्त होकर अन्धकार हटा देती है। यह निद्रामग्न व्यक्तियों को धर्म

( यज्ञ गोसेवा आदि ) अर्थ, काम ( भोग ) को दिलाने के लिए जगाती है। यह अपने समय में उस बात पर भी विचार द्वारा स्पष्ट प्रकाश कर देती है जो कि अव्यक्त है। धन, अन्न, यज्ञ, नानाविध जीविकाएँ विशेष क्या सभी अभिलाषाओं के विषय में यह प्रकाश देती है। जिससे चिन्ता-असन्तोष रूप अन्धकार में फँसा हुआ व्यक्ति बाहर आ जाता है। यह उषा स्वर्ग की कन्या अर्थात् स्वर्गीय सुखों को देनेवाली, है। इसमें काम करनेवाला सदा जवान ( स्फूर्तिसम्पन्न ) शुद्ध भावना सम्पन्न समस्त पार्थिव धन का अधिकारी बन सकता है। उषा जीवन के पोषकतत्त्व को लाती है। इसलिए वेद कहता है कि 'बिछौना छोड़ो, निद्रा तोडो, हमारे शरीर की स्वस्थता और जीवन का यह समय आगया है। अन्धकार हटगया, प्रकाश आ गया। सूर्यका उदय होने जा रहा है। हम वहाँ चलें जहां आयु और अन्न बढ़ाया जाता है।' सूक्त के मनन से यह भी ज्ञात होता है कि—इस समय के वेदाध्ययन या देवताओं के स्तुति पाठसे आयु अन्न और सन्तति की प्राप्ति होती है। गोसेवा, यज्ञादि सत्कार्य, कसरत, कुश्ती, घोड़े की सवारी करना, स्वास्थ्य के लिए घूमना, अपने लक्ष्य पर विचार करना इस समय में बहुत ही लाभप्रद है। इस समय उठकर कार्य करने वाला व्यक्ति अच्छा नागरिक बन सकता है। उषः काल के विचार से दिन में जो भी प्राप्त होगा वह पुरुष के लिए कल्याणकारी एवं शान्तिदायक है।

*औषसं सूक्तरत्नं सद्, वेद-रत्नाकरोद्धृतम् ।*
*मिश्र-गोपालचन्द्रस्य ज्योत्स्नया राजतां हृदि ॥*

॥ इति उषःसूक्तं समाप्तम् ॥

—:*:—

ज्योत्स्नाविवृति-वेददीपभाष्य-मन्त्रार्थदीपिकेति-
त्रितयसहितः—

# शान्त्यध्यायः

[ शुक्लयजुर्वेदीयः ३६ तमोऽध्यायः ]



वैदिकसार्वभौम—महायाज्ञिक-पं० श्रीभगवत्प्रसादमिश्रवेदाचार्य-
( प्रोफेसर गवर्नमेन्ट संस्कृत कालेज बनारस )
महोदयानां निर्देशेन सम्पादितः ।

# शान्त्यध्यायः

## [ शुक्लयजुर्वेदे ३६ तमोऽध्यायः ]

❀ ज्योत्स्ना ❀

*शान्तिकं याजुषं रत्नं गुर्वर्क—ज्ञानभा—वतः।*
*मिश्र—गोपालचन्द्रस्य ज्योत्स्नया संविभूष्यते॥*

*अध्यायपरिचयः*

शुक्लयजुर्वेदीयोऽयं षट्त्रिंशत्तमोऽध्यायः। शुक्लयजुर्वेदे अध्यायनिर्देशात्मक एक एव क्रमः प्रसिद्धः। मण्डलसूक्तयोः, अष्टकाध्याययोर्वा नात्र सन्निवेशः। अनुवाकनिर्देशश्चात्राध्यायान्तर्गत एव, प्रत्यध्यायं च विच्छिद्यत इति ऋग्वेदवन्न विशेषख्यातिमावहति। सोऽयमध्यायः 'शान्त्यध्याय' इति कथ्यते साम्प्रदायिकैः। अस्मिन्नध्याये अनुवाकद्वयं, कण्डिकास्तु चतुर्विंशतिः। आद्योऽनुवाकः षोडशकण्डिकात्मकः, द्वितीयश्चाष्टकण्डिकात्मकः। यजुर्वेदे याज्ञिकसमाख्यायां कण्डिका हि सोच्यते यस्यामेकमनेकानि वा यजूंषि ऋचो वा स्युः। यत्र पादावसाने ह्यानियते 'तद्यजु' रुच्यते। यत्र च पादावसाने नियताक्षरेषु भवतः सा 'ऋगि' त्युच्यते। चतुर्विंशतिकण्डिकासु पञ्चदश यजूंषि सप्तदश ऋचश्च सन्ति। अनुवाकयोः पृथक्त्वनिर्देशे तु—प्रथमेऽनुवाके नव यजूंषि पञ्चदश च ऋचः। द्वितीये षड् यजूंषि द्वे च ऋचौ। तदेवं चतुर्विंशतिकण्डिकासु (द्वयोश्चानुवाकयोः) द्वात्रिंशन्मन्त्रा भवन्ति। एषोऽध्यायः 'शुक्रिय' शब्देनापि व्यवह्रियते वेदविद्भिः। शुक्रियस्य चाध्ययनं दिवैव भवति न रात्राविति विशेषः।

ऋषिपरिचयः

एतस्य शान्त्यध्यायस्य दध्यङ् ऋषिः। शुक्लयजुर्वेदे दधीचा महर्षिणा दृष्टाः पञ्च अध्यायाः, ते चान्तिमाः षट्त्रिंशत्तमाच्चत्वारिंशत्तमाध्यायपर्यन्ताः [ ३६–४० अ० ] सन्ति। तेषु ऊनचत्वारिंशाध्यायस्य सप्तमप्रभृति-त्रयोदशान्ताः कण्डिका अन्यमहर्षिदृष्टाः सन्ति। एवं च यजुर्वेदे एतेन महर्षिणा दृष्टाः षण्णवति [९६] कण्डिकाः समुपलभ्यन्ते। उपनिषत्सु प्रथमपरिगणनीया ब्रह्मज्ञानोपदेशिका ईशावास्योपनिषदपि दध्यङ्महर्षिदृष्टैव भवति। ऋक्संहितायां न कोऽपि मन्त्रः एतद्दृष्टः समुपलभ्यते। शान्त्यध्याये बहवो मन्त्राः पूर्वेष्वध्यायेषु समाम्नाताः सन्ति। तत्र च तेषां भिन्ना एव ऋषयः समुपदिष्टाः। परमत्र तेषां मन्त्राणां पाठः पूर्वोक्तानामृषीणां तन्मन्त्रद्रष्टृत्वमपवदति। तस्मात्सर्वेषामपि शान्त्यध्यायोक्तमन्त्राणां दध्यङ्ङाथर्वण एक एव ऋषिः।

इतिवृत्तम्—अथर्वा इत्यासीत्कश्चन महर्षिरथर्ववेदस्य प्रमुख ऋषिः। तस्य 'दध्यङ्' नामापत्यमासीत्। दध्यञ्चं हीन्द्रो प्रवर्ग्यविद्यां मधुविद्यां चोपदिदेश समकथयच्च—यदीमां विद्यामन्यस्मै कथयिष्यसि तर्हि शिरस्ते छेत्स्यामीति। अथ कदाचिदश्विनौ विद्यामध्येतुं प्रार्थयामासतुर्दध्यञ्चमृषिम्। योग्यशिष्यायाध्यापनं विद्याया वीर्यत्वापादकं भवतीत्यध्यापयितुमिच्छन्नपीन्द्रवचनं श्रावयन्स्वस्यासामर्थ्यं प्राचीकशदृषिः। अथाश्विनाविन्द्रस्य शिरश्छेदनपणमनुश्रुत्य विद्यां जिघृक्षन्तौ दध्यञ्चमब्रूताम् 'भगवन्! शिरसमेनं पृथक्कृत्य रक्षयावः, अथास्माकमुपदेशाय अश्वस्य शिरः संयोजयावस्तेन त्वमस्माननुगृहाणेति। ऋषिरपि देवभिषजोर्माहात्म्यमवगच्छँस्तथेत्यङ्गीकृत्य कृत्रिमेन हयशि-

रसा अश्विनौ मधुविद्यां प्रवर्ग्यविद्यां च आह्वयामास। अथेन्द्रो दधीचो विद्योपदेशनमवगत्य समागत्य च दधीचोऽश्व्यं शिरो वज्रेण न्यकृन्तत्। गते चेन्द्रेऽश्विनौ यथापूर्वं प्राथमिकेन शिरसा दध्यञ्चं समधत्ताम्। निकृत्तं चाश्व्यं शिरः शर्यणावदभिधे पर्वते सरसो मध्ये निपपात। सोऽयं दध्यङ्ङृषिर्महातपस्वी आसीत्। एतस्य हि जीवतो दर्शनेन असुराः पराजयन्ति स्म। अथ कालक्रमेण दधीचः पाञ्चभौतिके वपुषि परित्यक्ते सत्यसुराः पृथिव्यां संव्याप्नुवन्। तत इन्द्रस्तैरसुरैर्योद्धुमशक्नुवन्दध्यञ्चमृषिमन्विच्छन् तदाश्रमवासिभिः 'पंचत्वं गतो महर्षिरि'ति शुश्राव, पर्यपृच्छच्च दधीचः किञ्चिन्मात्रमपि दग्धभस्मावशिष्टमवयवपरिज्ञानम्। तदा अश्विनोर्मधुविद्योपदेशकमाश्वं शिरः कुत्रचित् स्यादिति प्रोक्तवद्भ्यस्तेभ्यस्तदन्वेषणाय प्रतिकथिते, कुरुक्षेत्रस्य पश्चिमार्धे शर्यणावति देशे तच्छिरोऽनुलभ्य तदीयास्थिभिरसुराञ्जघान विजयं चाससादेति। तदेवं महानयमृषिर्जीवन् विद्याप्रदानेनाश्विनोः, गुरोरिन्द्रस्य प्रतिपक्षिणो विनाशेनोपकुर्वंश्च मृतोऽपि स्वास्थिभिर्गुरुरोपचकारेत्यादर्शभूतं जीवनमेतस्य। पौराणिकास्तु--दधीचिरिति महर्षिनाम पठित्वा वृत्रपीडित इन्द्रो दधीचेः सकाशात्तदस्थीनि याचित्वा तदस्थिनिर्मितवज्रेण वृत्रं जघानेति समुपदिशन्ति।

## छन्दःपरिचयः

प्रथमकण्डिकायां पञ्च यजूंषि। तत्राद्यानां चतुर्णां 'प्रपद्ये' ऽन्तानां यजुषां* सप्ताक्षरत्वाद् दैवीजगती छन्दः। 'वागोज' इति पञ्चमयजुषो द्वादशाक्षरत्वात् याजुषीगायत्री छन्दः। द्वितीयकण्डिकायामेकं यजुः 'वा अतितृण्णम्' इति व्यूहेन चत्वारिं

* यजुषां छन्दोलक्षणादि मदीये छन्दोग्रन्थे द्रष्टव्यम्।

शदक्षरत्वादार्षीपंक्तिश्छन्दः। तृतीयादिसप्तम्यन्तानां गायत्री छन्दः। तृतीयायामादौ 'भूर्भुवः स्वः' इति महाव्याहृतयः, तत्र त्रीणि यजूंषि। तत्र 'भूः' इत्यस्य दैवीगायत्री छन्दः। 'भुव' इत्यस्य दैव्युष्णिक्। 'स्वः' इति दैवीगायत्री, 'सुव' इति व्यूहेन दैव्युष्णिग्वा, वाचनिकं तु दैव्यनुष्टुप्छन्दोऽप्युपलभ्यते। तथा ऋक्षु तृतीयायां 'वरेणियम्' पञ्चम्यां 'सतियो' सप्तम्यां 'तुवं न ऊतिया अभि' इत्याद्ये पादे व्यूहाः। षष्ठी पादनिचृद्गायत्री[1] त्रयाणां सप्ताक्षरत्वात्। अष्टम्यां द्विपदा विराड्गायत्री[2] तत्र प्रथमोऽष्टाक्षरो द्वितीयो द्वादशाक्षरः पादः। नवम-दशम्योरनुष्टुप्[3] तत्र चत्वारोऽपि पादा अष्टाक्षराः। नवम्याः द्वितीये 'भवतु अर्यमा' व्यूहः। दशम्या आद्यौ सप्ताक्षरौ तेन द्व्यक्षरन्यूनत्वाद् विराट्[4]। एकादश्यां द्वे ऋचौ। तत्र 'अहानि शं' इत्यष्टाक्षरपादा द्विपदा[5] गायत्री। 'शं न इन्द्राग्नी' एकादशाक्षरैश्चतुर्भिस्त्रिष्टुप्। द्वादश्यादिषोडश्यन्तं गायत्री। द्वादश्यां 'भव अनृक्षरा' इति सन्धिच्छेदः। सप्तदश्यां सप्तपञ्चाशदक्षराणीति यजुः, एकाधिका शक्करी छन्दः। अष्टादश्यां ऊनपञ्चाशदक्षरत्वात् एकाधिका ब्राह्मी अनुष्टुप् छन्दः, यजुः। एकोनविंश्याः एकविंशत्यक्षरत्वाद्दगुष्णिक् छन्दः, यजुः। विंश्याः सप्तत्रिंशदक्षरत्वादेकाधिका आर्षीबृहतीछन्दः, यजुः। एकविंश-द्वाविंश्योरनुष्टुप्।

---

१ 'क्वचित्त्रिपाद्दषिभिः। सा पादनिचृत्।' पि० छ० ३।९–१०;

२ 'तृतीयं द्विपाज्जागत-गायत्राभ्याम्।' पि० छ० ३।१६;

३ 'अनुष्टुब् गायत्रैः।' पि० छ० ३।२३;

४ 'द्वाभ्यां विराट्-स्वराजौ'—पि० छ० ३।६०; ऊनाधिकाभ्यामिति शेषः।

५ 'अष्टाक्षराभ्यां गायत्री' उ० सू० २ अ०;

आद्यायास्तुर्ये 'सुवः' द्वितीयाया उत्तरार्धे 'प्रजाभियः' 'पशुभियः' इति व्यूहौ। त्रयोविंश्या पञ्चत्रिंशदक्षरत्वादेकोना आर्ष्यनुष्टुप् छन्दः; यजुः। चतुर्विंश्याः यजुषः सप्तषष्ट्यक्षरत्वात् एकाधिका ब्राह्मी त्रिष्टुप्छन्द इति।

## देवतापरिचयः

शान्त्यध्यायस्य मन्त्रेषु बहवो देवता नामतो निर्दिष्टा उपलभ्यन्ते, तथापि सर्वानुक्रमणीग्रन्थे तत्रैव अध्यायस्य वैश्वदेवत्वमुक्तं यथा—'आद्योऽध्यायः शान्त्यर्थो वैश्वदेवः' इति। 'पञ्चाध्यायो' इति तत्र पूर्वमुक्तं, तत्संबन्धेनाद्योऽध्याय इत्युच्यते। आद्यश्चाध्यायः 'ऋचं वाच' मित्येव। स शान्तिकरणाय विनियुक्तो विश्वेदेवदैवतः इति तदर्थः। एवं च मन्त्राणां पृथक्पृथग्दैवते[1] सत्यपि सामूहिकतया विश्वेदेवदैवत्यं परिज्ञापितं भवति।

विश्वेदेवपरिचयः—विश्वेदेवशब्दे हि विश्वशब्दः सर्वशब्दपर्याय इति भगवतो यास्कस्य मतम्। देवविशेषस्यैव कस्यचनासाधारणं लिङ्गमिति शाकपूणेर्मतम्। अत्र तु—'विश्वेदेव' इति नैकस्या देवताया नाम भवति। अपि तु अनेकेऽपि देवाः समुच्चिता 'विश्वेदेव' शब्देन व्यपदिश्यन्ते। तदिदं विश्वेदेवपदं बहुवचनान्तमेव संज्ञावाचकं सत् उत्तरपदस्य देवशब्दस्य विभक्त्या वचनेन च पूर्वं विश्वपदे तत्तद्विभक्तिषु विपरिणम्यमानं प्रयुज्यते, यथा-विश्वेभ्यो देवेभ्यः, विश्वेषां देवानां, इत्यादि। सर्वस्यापि देवस्य 'देवो' 'द्युस्थानो भवतीति' निरुक्त्या द्युस्थानित्वावगमात् 'विश्वेदेव' शब्दस्य द्युस्थानिकदेवगणेषु पाठः (नि०१२।३८) इति। पौराणिकास्तु धर्मस्य विश्वाख्यायां भार्यायां जाता विश्वेदेवाख्याः पुत्रास्ते च सर्वेऽप्यनपत्या इत्यभिप्रयन्ति।

---

१ ते च मान्त्रिका देवा महीधरभाष्ये यथायथं द्रष्टव्याः।

एत एव सङ्ख्यया दश, छन्दतया च पञ्चसु वर्गेषु विभक्ता व्यवस्थया तत्तच्छन्देषु एकैकेन वर्गेण समाहृतत्या आह्वरक्षका देवता इति स्मार्तयाज्ञिकाः, इति दिक्।

*विनियोगपरिचयः*

अस्ति हि 'प्रवर्ग्य' संज्ञकं कर्म। तदिदमग्निष्टोम–राजसूय-वाजपेयादियज्ञेषु समनुष्ठीयते। तत्राग्निष्टोमादीनां सर्वप्रथमं क्रियमाणे प्रयोगे प्रवर्ग्यकरणं वैकल्पिकतया, द्वितीयादिप्रयोगेषु च नित्यतयाम्नातम्। अत्र हि प्रवर्ग्ये मृत्तिकाभिरुलूखलाकारो 'महावीर' संज्ञकः पात्रविशेषो निर्मीयते। पात्रे चास्मिन् गोः अजायाश्च पयसा 'घर्म' इति खाद्यविशेषो निष्पाद्यते। देवताभ्यो हुत्वा चायं घर्मो यजमानादिभिर्भक्ष्यते। तदस्य घर्मस्य निष्पादनं, होमः, भक्षणमिति सर्वमपिहितद्वारे यज्ञियदेशे भवति। तत्र द्वारापिधानात्परं 'ऋचं वाचमि' त्यध्यायस्य पाठं कृत्वा प्रवर्ग्यचरणं ( घर्मनिष्पादनादि ) भवति। कृते च प्रवर्ग्यचरणे शान्त्यध्यायमिममधीत्य ततो द्वारोद्घाटनं भवतीत्येतस्य शान्त्यध्यायस्य प्रवर्ग्यचरणस्याद्यन्तयोः शान्त्यर्थं जपे विनियोगः।

मन्त्रव्याख्यानम्—

१

ऋचं वाचं प्र पद्ये, मनो यजुः प्र पद्ये, साम प्राणं प्र पद्ये।
चक्षुः श्रोत्रं प्र पद्ये, वागोजः सहौजो मयि प्राणापानौ॥

❀ ज्योत्स्ना ❀ [ अन्वयः ] १— ऋचं वाचं प्र पद्ये। २—यजुः मनः प्र पद्ये। ३—साम प्राणं प्र पद्ये। ४—चक्षुः श्रोत्रं प्र पद्ये। ५—वाक्, ओजः, ओजः, प्राणापानौ सह मयि ( सन्ति )।

[ हिन्दी ] वेदरूप इन्द्रियों की *शरणागति*—मैं ऋग्वेदरूपा वाणी के, यजुर्वेदरूप मन के, सामवेदरूप प्राण के शरणागत हूँ।

**आँख कान आदि इन्द्रिय देवताओं के शरणागत हूँ। वाणी, मनका साहस ( धृष्टता ), शारीरिक बल, प्राण अपान ( श्वास ) वायु ये सब एक साथ मेरे में वर्तमान हैं ॥ १ ॥**

❀ *महीधराचार्यकृतं वेददीपभाष्यम्* ❀

"प्रश्चाध्यायी आथर्वणेन दधीचा दृष्टा 'दध्यङ् ह वा आथर्वण एतं शुक्रमेतं यज्ञं विदाञ्चकारे'ति (श० ब्रा० १४।१।१।१८ ) श्रुतेः। 'उग्रश्च' (य०३९।७) इत्याग्निको मन्त्रः, 'अग्निं हृदयेने' त्याद्यध्यायसमाप्तिपर्यन्तम् ( य० ३९।८-१३ ) आश्वमेधिकम्, तद्द्वयं वर्जयित्वा [1]।" ( तत्र का त्यायनसूत्रम् ) शान्तिकरणमाद्यन्तयोः [2]। ऋचं वाचमित्यध्यायेन शान्तिकरणं कार्यं, स्वाध्याये मन्त्रपाठे प्रवर्ग्यमन्त्रादावस्याध्यायस्य दर्शनात्।

"अथ मन्त्रार्थः। पञ्च यजूंषि लिङ्गोक्तदेवतानि।" १—**ऋच**मृग्रूपां **वाचमहं प्रपद्ये** प्रविशामि शरणं व्रजामि। २—**यजुः** यजूरूपं **मनः** ( **प्रपद्ये** ) प्रविशामि। ३—**प्राणं** प्राणरूपं **साम प्रपद्ये**। ४—**चक्षुरिन्द्रियं (च) श्रोत्रेन्द्रियं च प्रपद्ये**। वागादिग्रहणं सप्तदशावयवोपलक्षणम्, सप्तदशावयवं प्रजापतेर्लिङ्गं प्रपद्ये इत्यर्थः। त्रयीविद्यां लिङ्गशरीरं च प्रपन्नं प्रवर्ग्यो न नाशयेदिति भावः। ५—तथा **वागिन्द्रियमोजो** मानसं बलं धार्ष्ट्यम्। पुनरोजोग्रहणाच्छारीरं च **बलम्**। **प्राणापानौ** उच्छ्वासनिश्वासवायू च। **एते सह** एकीभूताः सन्तो **मयि वर्तन्ते**। "अतोऽपि प्रवर्ग्योऽस्मान्न हन्तीति भावः" ( अतो मदिष्टकर्मणि शान्तिर्भवत्वित्यभिप्रायः ) ॥ १ ॥

❀ *शत्रुघ्नविरचिता मन्त्रार्थदीपिकाव्याख्या* ❀

( एकादशसु कण्डिकासु मन्त्रार्थदीपिका-महीधरभाष्ययोः सातिशय-

---

१. तथा च सर्वानुक्रमण्याम्—'ऋचं वाचं पञ्चाध्यायीं दध्यङ्ङाथर्वणो ददर्शाग्निकाश्वमेधिकवर्जम्।'— ३३७,

२. 'स्वाध्यायदर्शनादि'ति शेषः। का० श्रौ० २६।७।५८:;

मन्त्ररसाम्यमस्तीति तेषु स्थलेषु पृथङ्मन्त्रार्थदीपिकाव्याख्यानमनावश्यकतया न समुपस्थाप्यते। किन्तु महीधरभाष्ये एव ( ) कोष्ठकान्तर्गतो मन्त्रार्थदीपिकायाः विशेषः पाठः। " " एतच्चिह्नान्तश्च 'महीधरभाष्ये वर्तमानो विशेषः पाठः सुपरिज्ञानाय विनिवेशितः। शिष्टश्च पाठः उभयोरपि समानः प्रत्येतव्य इति तदत्र प्रथमे मन्त्रेऽपि महीधरभाष्येण साहश्यान्न पृथग्व्याख्यानिर्देशः कृतोऽस्ति)।

२

यन्मे छिद्रं चक्षुषो हृदयस्य मनसो वातितृण्णं बृहस्पतिर्मे तद्दधातु। शं नो भवतु भुवनस्य यस्पतिः॥

❀ ज्योत्स्ना ❀ [ अन्वयः ] मे चक्षुषः यत् छिद्रं, हृदयस्य मनसो वा अतितृण्णम्, बृहस्पतिः मे तत् दधातु। भुवनस्य यः पतिः (सः) नः शं भवतु।

[ हिन्दी ] *कमी पूर्ति की प्रार्थना*—जो मेरी चक्षु इन्द्रिय की कमी, तथा हृदय या मन की कमजोरी है उसे बृहस्पति देवता हटावें। जो संसार का स्वामी है वह हमारे लिए सुख रूप बने॥ २॥

❀ वे० दी० ❀ } "बृहस्पतिदेवत्या पङ्क्तिः" मे मम चक्षुषः चक्षुरि-
❀ मं० दी० ❀ } न्द्रियस्य यत् छिद्रमवखण्डनं जातं(अपकर्माचरणेन) "प्रवर्ग्याचरणेन"। हृदयस्य बुद्धेर्वा यत् छिद्रं जातम्। मनसो वा यत् अतितृण्णमतिहिंसितम्। "प्रवर्ग्याचरणेन" यत् चक्षुर्बुद्धिमनसां व्याकुलत्वं जातं बृहस्पतिर्देवगुरुः मे मम तत् छिद्रमतितृण्णं च दधातु सन्दधातु छिद्रं निवर्तयतु। भुवनस्य भूतजातस्य यः पतिरधिपतिः (सर्वेष्टफलदात्मको यो) प्रवर्ग्यरूपो यज्ञः स नो ऽस्माकं शं सुखरूपो भवतु।

( शमिति सुखनाम ) "बृहस्पतिना छिद्रापाकरणात् प्रवर्ग्यः कल्याणरूपोऽस्त्वित्यर्थः" ॥ २ ॥

३

भूर्भुवः स्वः । तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि ।
धियो यो नः प्र चोदयात् ॥

* ज्योत्स्ना * [ अन्वयः ] १—भूः, २—भुवः, ३—स्वः । ४—तत् देवस्य सवितुः वरेण्यम् भर्गः धीमहि । यः नः धियः प्र चोदयात् ॥

[ हिन्दी ] *बुद्धि की प्रेरणा*—पृथ्वी अन्तरिक्ष और द्युलोक में व्याप्त उस देवता सविता के सबके द्वारा प्रार्थनीय समस्त पापनाशक तेज का हम ध्यान करते हैं । जो सविता हमारी बुद्धियों की प्रेरणा करता है ॥ ३ ॥

* वे० दी० * भूर्भुवः स्वः त्रीणि यजूंषि । तत्सवितुः (३) कया नः (४) कस्त्वा (५) अभी षु णः (६) एताश्चतस्र ऋचो व्याख्याताः । [···सावित्री, गायत्री······] । **तदिति** षष्ठ्यर्थे । तस्य **देवस्य** द्योतनात्मकस्य **सवितुः** प्रेरकस्यान्तर्यामिणो विज्ञानानन्दस्वभावस्य, हिरण्यगर्भोपाध्यवच्छिन्नस्य वा, आदित्यान्तरपुरुषस्य वा, ब्रह्मणो **वरेण्यं** वरणीयं सर्वैः प्रार्थनीयं **भर्गः** सर्वपापानां सर्वसंसारस्य च भर्जनसमर्थं तेजः सत्यज्ञानानन्दादि वेदान्तप्रतिपाद्यं वयं **धीमहि** ध्यायामः । छान्दसं संप्रसारणम् । यद्वा 'मण्डलं पुरुषो रश्मय' इति त्रयं भर्गःशब्दवाच्यम् । भर्गो वीर्यं वा 'वरुणाद्ध वा अभिषिषिचानाद् भर्गोऽपचक्राम । वीर्यं वै भर्गः' ( श० ब्रा० ५।४।५।१ ) इति श्रुतेः । तस्य कस्य । **यः** सविता **नो**ऽस्माकं **धियः** बुद्धीः कर्माणि वा, **प्र चोदयात्** प्रकर्षेण चोदयति प्रेरयति सत्कर्मानुष्ठानाय । यद्वा वाक्यभेदेन योजना । सवितुर्देवस्य तत् वरेण्यं भर्गो ध्यायामः । यश्च नो बुद्धीः प्रेरयति तं च ध्यायामः, स च सवितैव । लिङ्गव्यत्ययेन योजना ।

सवितुर्देवस्य तत् भर्गो धीमहि। यो यत् भर्गो नो बुद्धीः प्रेरयति।
—य० ३।३५ ]॥ ३ ॥

ꙮ मं० दी० ꙮ ततो व्याहृतिसहिता तत्सवितुरिति गायत्री सन्ध्या-प्रकरणे व्याख्याता। [ तत् तस्य, भर्गस्तेजः, धीमहि ध्यायेम चिन्तयामः। अत्र यद्यपि तदिति पदं भर्गविशेषणं नास्ति तथापि तच्छब्दप्रयोगादेव यच्छब्दप्रयोगो लभ्यते। तथा च योगियाज्ञवल्क्यः—

'तच्छब्देन तु यच्छब्दो बोद्धव्यः सततं बुधैः।
उदाहृते तु यच्छब्दे तच्छब्दः स्यादुदाहृतः॥' इति।

तस्य कस्य ? सवितुः सर्वभावानां प्रसवितुः। तथा च याज्ञवल्क्यः—

सविता सर्वभूतानां सर्वभावान् प्रसूयते।
सवनात् पावनाच्चैव सविता तेन चोच्यते॥' इति।

पुनः किं भूतस्य ? देवस्य दीप्तिक्रीडादियुक्तस्य। तथा च योगियाज्ञवल्क्यः—

दीव्यते क्रीडते यस्मात् द्योतते रोचते दिवि।
तस्माद् देव इति प्रोक्तः स्तूयते सर्वदेवतैः॥' इति।

तं कम् ? यो भर्गो नोऽस्माकं धियो बुद्धीः, प्रचोदयात् प्रेरयति। धर्मार्थकाममोक्षेषु अस्मदादीनां बुद्धिं योजयति इत्यर्थः। तथा च योगियाज्ञवल्क्यः—

'चिन्तयामो वयं भर्गं धियो यो नः प्रचोदयात्।
धर्मार्थकाममोक्षेषु बुद्धिवृत्तीः पुनः पुनः॥' इति।

तदिह भर्गशब्देन बहुविधमाहात्म्यमुक्तम्। सवितृमण्डलगतादित्यदेवता स्वःपुरुष उच्यते। तथा—

भ्रस्ज पाके भवेद्धातुर्यस्मात्पाचयते ह्यसौ।
भ्राजते दीप्यते यस्माज्जगच्चान्ते हरत्यपि॥
कालाग्निरूपमास्थाय सप्तार्चिः सप्तरश्मिभिः।
भ्राजते तत्स्वरूपेण तस्माद् भर्गः स उच्यते॥

तथा—

भेति भीषयते लोकान्, रेति रञ्जयते प्रजाः ।
गत्या गच्छत्यजस्रं यो भगवान् भर्ग उच्यते ॥

अत्र बुधैरिति शेषः । यद्यपि सवितुर्भर्ग इति सवितृभर्गयोर्भिन्नता गायत्रीमन्त्रे प्रतीयते । तथापि परमार्थचिन्तायां सवितृभर्गयोर्भेदो न विद्यते । स एव सविता स एव भर्गः । सवितृभर्गयोरद्वैतमेव । तथा च राहोः शिर इतिवत् षष्ठी न भेदसाधिका । पुनरपि किं भूतं भर्ग ? वरेण्यं वरणीयं प्रार्थनीयं जन्ममृत्युदुःखनाशाय ध्यानेनोपासनीयमित्यर्थः । तथा च योगि-याज्ञवल्क्यः—

वरेण्यं वरणीयं च संसारभयभीरुभिः ।
आदित्यान्तर्गतं यच्च भर्गाख्यं वा मुमुक्षुभि ॥
जन्ममृत्युविनाशाय दुःखस्य त्रिविधस्य च ।
ध्यानेन पुरुषो यस्तु द्रष्टव्यः स सूर्यमण्डले ॥ इति ।

एवं गायत्र्यास्तस्य च माहात्म्यमुपवर्ण्य पुनस्तस्यैव महाप्रभावत्वं सप्त-[1] व्याहृतिभिर्विशेषणीभूताभिरभिधीयते । तद्यथा—किंभूतं भर्गम् ? भूरा-दिव्याप्य तिष्ठदिति शेषः । तथा च भूरादिसप्तलोकप्रकाशकम् भूर्भूमि-लोकः । एवमुपर्युपरि भुवः भुवर्लोकः अन्तरिक्षं, स्वः स्वर्लोकः, महर्म-हर्लोकः, जनः जनलोकः, तपः तपोलोकः, सत्यं सत्यलोकः । एवमुपर्युपरि क्रमेणावस्थितान् सप्तलोकानभिव्याप्यावतिष्ठमानमदो भर्गः । एतान् सप्त-लोकानेव प्रदीपवत्प्रकाशयतीत्यर्थः । यद्वा भूरादीनां भर्गादिभेद एव प्रति-पाद्यः सप्तमहाव्याहृतय एवेति । पुनः किंभूतं भर्गम् ? आपो ज्योतीरसोऽ-मृतं ब्रह्म भूर्भुवः स्वरोम् । एतद्रूपमित्यर्थः । ]

---

१ अत्र सप्तव्याहृतीनां शिरसश्च व्याख्यान्वयित्वं प्राणायामप्रकरणानु-बन्धित्वादस्तीति तथैवास्माभिरत्रापि समुद्धृतम् । तच्च महाव्याहृतिसत्त्वान्न विशेषतोऽप्रासङ्गिकमिव प्रतिभासेताध्येतृभ्यः ।

२ ५ ९ ६ ४ २ ६

कया नश्चित्र आ भुवदूती सदावृधः सखा ।
कया शचिष्ठया वृता ॥

वर्तमानया

* ज्योत्स्ना * [ अन्वयः ] चित्रः सदावृधः ( इन्द्रः ) कया ऊती नः सखा आ भुवत् । कया वृता शोचिष्ठया 'नः सखा आ भुवत्' ।

[ हिन्दी ] *सहायता के लिए विचार*—पूज्य और सदा बढ़नेवाला इन्द्र देवता किस प्रीतिजनकक्रिया से हमारा सहायक होता है ? तथा किस वर्तमान यागक्रिया से हमारा सहायक होगा ? ॥४॥

* वे० दी० * [तिस्रो गायत्र्य ···इन्द्रदेवत्या वामदेव्यसाम्नो योनिः 'वामदेव्यमात्मन्' इति श्रुतेः । अन्त्या पादनिचृत् सप्ताक्षरत्रिपादा । पूर्वर्चः इन्द्रपदमनुषञ्जनीयम् । इन्द्रः कया ऊती ऊत्या अवनेन तर्पणेन प्रीणनेन वा नोऽस्माकं सखा सहायः आभुवत् आभिमुख्येन भवति । तथा (कया) वृता वर्तत इति वृत् तया वृता, वर्तमानया । शचिष्ठया अतिशयेन शची शचिष्ठा तया अतिशयवत्या यागक्रिययास्माकं सखा भवति । शचीति कर्मनाम (निघं० २।१) तत् इष्ठन् प्रत्ययः । कीदृश इन्द्रः । चित्रः विचित्रः पूज्यो वा । सदावृधः सदा वर्धत इति सदावृधः 'इगुपध' ( पा० ३।१ १३५ ) इति कप्रत्ययः । सदा वर्धमानः । ऊती तृतीयैकवचनस्य 'सुपां सुलुक्' ( पा० ७।१।३९ ) इति पूर्वसवर्णः । आ भुवत् 'इतश्च लोपः परस्मैपदेषु' ( पा० ३।४।९७ ) इति तिप इलोपः । शपश्छान्दसे ङित्त्वे धातोरुवङादेशः—य० २७।३९ ] ॥ ४ ॥

* मं० दी० * कया न इति मन्त्रो नवग्रहपूजनप्रकरणे व्याख्यातः । [ चित्रः चायनीयः इन्द्रः । कया ऊती ऊत्या केन पुनरवनेन तर्पणेन नः अस्माकं सदावृधः । सदाकालं वर्धयिता । भुवत् भूयात् । कया च आवृता कर्मणा परिपाट्या नः अस्माकं सखा सहायश्च आभुवत् आभिमुख्येन भवेत् । यद्वा वर्तत इति वृत् तया वृता वर्त-

मानया, किंभूतया ? शचिष्ठया 'शचीति कर्मनाम' ( निघं २।१ ) अतिशयेन शची शचिष्ठा तया अतिशयेन कर्मवत्या। कीदृश इन्द्रः ? चित्रः विचित्रः पूज्यो वा ] ॥ ४ ॥

५

कस्त्वा सत्यो मदानां मꣳहिष्ठो मत्सदन्धसः ।
दृढा चिदारुजे वसु ॥

* ज्योत्स्ना * [ अन्वयः ] 'हे इन्द्र !' अन्धसः मदानां मंहिष्ठः कः सत्यः त्वा मत्सत् । ( येन ) दृढा चित् वसु आरुजे ।

[ हिन्दी ] *प्रसन्नता और धनलाभ*—हे इन्द्र ! सोमरूप अंशका मादकों में मादक ( अत्यन्त मस्ती देने वाला ) कौन सा अमोघ अंश आपको प्रसन्न करेगा, जिससे आप कठोर (अक्षय) धन भी दान के लिए तोड़ देते हैं। अर्थात् दुष्प्राप्य वस्तु भी प्राप्त हो जाती है ॥ ५ ॥

*वे० दी०* *मं० दी०* [ हे इन्द्र ! अन्धसोऽन्नस्य सोमरूपस्य कः (सत्यः) अंशः त्वा त्वां मत्सत् माद्यति मत्तां करोति। 'मदी हर्षे' 'लेटोऽडाटौ' (पा० ३।४।९४) इत्यडागमः 'सिब्बहुलं लेटि' (पा० ३।१।३४) (इति) सिप् प्रत्ययः, तिप इलोपः। कीदृशः मदानां मंहिष्ठः मदयन्ति तानि मदानि पचाद्यच्। मदजनकानि हवींषि, तेषां मध्ये मंहिष्ठः श्रे(प्रे)ष्ठः अत्यन्तमदजनकः। 'महि कान्तौ' चुरादिः, मंहयति द्योतते मंही, अत्यन्तं मंही मंहिष्ठः। यद्वा 'महि वृद्धौ' भ्वादिः, महते वर्धते मंही अत्यन्तं मंही मंहिष्ठः। येनांशेन मत्तः सन् दृढाचित् दृढान्यपि वसु वसूनि धनानि कनकादीनि त्वमारुजे 'रुजो भङ्गे' पुरुष "पद" व्यत्ययः। आरुजसि चूर्णयसि दातुं "मनसि" ( मनसि ) भङ्क्त्वा "भङ्क्त्वा" ददासीत्यर्थः—य० २७।४० ] ॥ ५ ॥

६

अभी षु णः सखीनामविता जरितॄणाम् ।
शतं भवास्यूतिभिः ॥

❀ ज्योत्स्ना ❀ [ अन्वयः ] 'हे इन्द्र !' सखीनां जरितॄणाम् अविता नः ऊतिभिः सु अभि शतं भवासि ॥

[ हिन्दी ] *भक्तों के लिए अनेकरूपता*—हे इन्द्र ! मित्र और स्तुतिकर्ता हमलोगों की रक्षा करने वाले आप, रक्षा के लिए बहुत से अच्छे रूपों के हो जाते हैं। अर्थात् रक्षार्थ आप नाना रूप धारण कर लेते हैं ॥ ६ ॥

❀ वे० दी० ❀ } 'अभी षु णः' इत्यस्यामृचि 'शतं भवास्यूतिभिरि'
❀ मं० दी० ❀ } ति बहुवचनम्। पूर्वं 'मूतये' इत्येव पाठः। ऊतिभिः अवनैर्हेतुभिः शतमसंख्यरूपो भवसीत्यर्थः।" [ हे इन्द्र ! (त्वमूतये-ऊतिभिरवनैर्हेतुभिः ) त्वमूतयेऽवनाय पालनाय ( नः अस्माकमिति वा ) "सु" सुष्ठु सम्यक् अभि आभिमुख्येन शतं भवासि भवसि, ( लेटि ) आडागमः। शतशब्दो बहुवाची, बहुरूपो भवसि। ( अस्माकं ) पालनाय नानारूपाणि दधासीत्यर्थः। कीदृशस्त्वम्—सखीनां मित्राणां जरितॄणाम् स्तोतॄणां नोऽस्माकमृत्विजामविता पालयिता। संहितायामभीत्यस्य दीर्घः। 'सुञः' ( पा० ८।३।१०७ ) ( इति ) सुशब्दस्य षत्वम् 'नश्च धातुस्थोरुषुभ्यः' ( पा० ८।४।२७ ) इति षुशब्दात् परस्य "नः इत्यस्य" ( नकारस्य ) णत्वम्—य० २७।४१ ] ॥ ६ ॥

७

कया त्वं न ऊत्याभि प्र मन्दसे वृषन् ।
कया स्तोतृभ्य आ भर ॥

❀ ज्योत्स्ना ❀ [ अन्वयः ] हे वृषन् ! त्वं कया ऊत्या नः अभि प्र मन्दसे। कया ( च ) 'ऊत्या' स्तोतृभ्यः आभर।

[ हिन्दी ] *कृपासे इच्छापूर्ति*—हे वर्षाने वाले इन्द्र देव ! आप किस तृप्तिदायक हविष् के देने से हमें अपनी इच्छित वस्तुओं के दान द्वारा अत्यन्त मस्त करते हैं ? और किस तृप्ति से स्तुति

कर्ताओं के लिए धन लाते हैं—यह हम वेदों के द्वारा जानकर उसी भाँति आपके लिए कार्य करते हैं ॥ ७ ॥

❀ वे० दी०❀ ❀ मं० दी०❀ } "इन्द्रदेवत्या गायत्री अनिरुक्तेन्द्रपदहीना। आद्यपादे व्यूहद्वयम्।" हे वृषन्! वर्षतीति वृषा (तत्संबोधने) हे सेक्तः! इन्द्र! 'वासवो वृत्रहा वृषा' इत्यभिधानम् (अ० को० १।१।४२) (त्वं) कया ऊत्या केन तर्पणेन हविर्दानेन नोऽस्मानभि प्र मन्दसे अभि(प्र)मोदयसि 'मदिस्तु स्वपने जाड्ये मदे मोदे स्तुतौ गतौ' लट्। कया च ऊत्या तृप्त्या स्तोतृभ्यः स्तुतिकर्तृभ्यो यजमानेभ्यः, आभर आहर आहरसि धनं दातुमिति शेषः, तद्द्वयेन तथा वयं कुर्म इति भावः। आभरेति लडर्थे लोट् ॥ ७ ॥

८

इन्द्रो विश्वस्य राजति। शं नो अस्तु द्विपदे शं चतुष्पदे ॥

❀ ज्योत्स्ना ❀ [ अन्वयः ] विश्वस्य इन्द्रः ( यः ) राजति (सः) नः द्विपदे शम् अस्तु चतुष्पदे ( च ) शम् 'अस्तु'।

[ हिन्दी ] *समस्त परिवार के लिए सुखकी प्रार्थना*—समस्त जगत् का स्वामी जो प्रदीप्त हो रहा है वह हमारे दो पैर वाले पुत्र आदि के लिए सुख कारक होवे, और चार पैर के पशुओं के लिए भी सुखकारक होवे ॥ ८ ॥

❀ वे० दी० ❀ ❀ मं० दी० ❀ } "द्विपदा विराट् इन्द्रदेवत्या। विंशत्यक्षरा द्विपदा विराट् कथ्यते।" विश्वस्य सर्वस्य जगतः इन्द्रः 'इदि परमैश्वर्ये' इन्दतीति इन्द्रः, परमेश्वरः "महावीरः" आदित्यो वा यो राजति देदीप्यते ईष्टे वा स नोऽस्माकं द्विपदे विभक्तिव्यत्ययः द्विपदां पुत्रादीनां शं सुखरूपोऽस्तु चतुष्पदे चतुष्पदां गवादीनां च शं सुखरूपोऽस्तु ॥ ८ ॥

विस्तीर्ण पा...

९

शं नो मित्रः शं वरुणः शं नो भवत्वर्यमा ।
शं न इन्द्रो बृहस्पतिः शं नो विष्णुरुरुक्रमः ॥

❀ ज्योत्स्ना ❀ [ अन्वयः ] मित्रः नः शं 'भवतु' । वरुणः 'नः' शं 'भवतु' । अर्यमा नः शं भवतु । इन्द्रः नः शं 'भवतु' । बृहस्पतिः 'नः शं भवतु' । उरुक्रमः विष्णुः नः शं 'भवतु' ।

[ हिन्दी ] *सुख की प्रार्थना*—भक्तों से प्रेम करने वाले-मित्र देवता हमारे लिए सुखरूप बनें, अर्थात् सुखकारक होवें। भक्तों को स्वीकार करने-वाले वरुण देवता हमारे लिए सुखकारक होवें। भक्तों के पास जानेवाले अर्यमा देवता, परमैश्वर्यसंपन्न इन्द्र देवता, वेदों के रक्षक-बृहस्पति देवता, अतिविशाल पैर रखने वाले विष्णु देवता हमारे लिए सुखकारक बनें ॥ ९ ॥

* वे० दी० * } "द्वे अनुष्टुभौ, मित्रवरुणादयो देवताः" । मित्रो देवो
* मं० दी० * } नोऽस्माकं शं सुखरूपो भवतु महावीरप्रसादात् । मेद्यति भक्तेषु स्निह्यतीति मित्रः । वरुणः शं सुखरूपो भवतु । वृणोत्यङ्गीकरोति भक्तमिति वरुणः । अर्यमा नोऽस्माकम् शं भवतु । इयर्त्ति गच्छति भक्तं प्रतीत्यर्यमा । इन्द्रो देवेशो नोऽस्माकम् शं भवतु । बृहस्पतिर्देवगुरुर्नः शं भवतु । बृहतां वेदानां पतिः पालकः । उरुर्विस्तीर्णः क्रमः पादन्यासो यस्य स विष्णुः नोऽस्माकं शं भवतु । वेवेष्टि व्याप्नोतीति विष्णुः ॥ ९ ॥

१०

शं नो वातः पवता॑ शं नस्तपतु सूर्यः ।
शं नः कनिक्रदद्देवः पर्जन्यो अभि वर्षतु ॥

* ज्योत्स्ना * [ अन्वय: ] वात: न: शं पवताम् । सूर्य: न: शं तपतु । कनिक्रदत् पर्जन्य: देव: न: शं अभि वर्षतु ॥

[ हिन्दी ] हमारी *सार्वजनिक कामना*—वायु हमारे लिए सुख-कारक—मन्द एवं रोग उत्पन्न न करने वाला—बहे । सूर्य हमारे लिए सुखकारक—अति तीव्रताप न देते हुए औषध रूप से-तपे । शब्दकरनेवाला या वर्षाने वाला पर्जन्य देवता हमारे लिए सुखकारक—अन्न को हानि न पहुँचाने वाला क्षार रहित—बरसे ॥ १० ॥

* वे० दी० * }
* मं० दी० * } वातो वायुर्नोऽस्मकं शं सुखकारी अपरुषः अव्याधिजनकश्च ( सन् ) पवतां वहताम् 'पव गतौ' लोट् । सुवति जनान् स्वस्वव्यापारेषु प्रेरयति, सूर्यः शं सुखरूपो दहनो भेषजरूपश्च ( सन् ) नोऽस्माकं तपतु किरणान् प्रसारयतु । पर्जन्यः पिपर्त्ति पूरयति "जनमिति" ( जनानिति ) पर्जन्यः । पूरोऽम्भः पूरो जन्यते अनेन वा । 'पर्जन्यौ रसदब्देन्द्रौ' (अ० को० ३।३।१४६ ) इत्यभिधानम्। पर्जन्यः पर्जन्येशो देवः नोऽस्माकं शं सुखकरं काशनिक्षाररहितं यथा तथा अभिवर्षतु सिञ्चतु । कीदृशः कनिक्रदत् अत्यन्त क्रदन्तीति ( स्तनयित्नु) शब्दं कुर्वन् 'दाधर्त्तिदर्धर्ति' ( पा० ७.४।६५ ) इत्यादिना यङ्लुगन्तो निपातः ॥ १० ॥

११

अहानि शं भवन्तु नः शंरात्रीः प्रति धीयताम् ।
शं न इन्द्राग्नी भवतामवोभिः शं न इन्द्रावरुणा रातहव्या ।
शं न इन्द्रापूषणा वाजसातौ शमिन्द्रासोमा सुविताय शं योः॥

* ज्योत्स्ना * [ अन्वयः ] १—अहानि नः शं भवन्तु । रात्रीः शं प्रतिधीयताम् ।

२—इन्द्राग्नी अवोभिः नः शं भवताम्। रातहव्या इन्द्रावरुणा नः शं 'भवताम्'। वाजसातौ इन्द्रापूषणा नः शं 'भवताम्'। सुविताय शं योः इन्द्रासोमा 'नः' शं 'भवताम्'॥

[ हिन्दी ] *हमारी प्रार्थना*—दिन हमारे लिए सुखमय बनें। रात्री हमें सुख से रखें। इन्द्राग्नी देवता रक्षाके द्वारा सुखकारक बनें। दी गई हवि से तृप्त होने वाले इन्द्रावरुण देवता हमारे लिए सुखकारक बनें। अन्न देने के लिए इन्द्रापूषा देवता हमारे लिए सुखकारक बनें। अच्छी उत्पत्ति, रोगों के नाश और निर्भयता के लिए इन्द्रासोम देवता हमारे लिए सुखकारक बनें॥ ११॥

* वे० दी० * } १—"द्विपदा गायत्री, अहानि रात्रयश्च देवताः।"
* म० दी० * } अहानि दिनानि नोऽस्माकं शं सुखरूपाणि भवन्तु। रात्रीः "शं" सुखरूपाः (भवन्तु) अस्मासु प्रतिधीयतां प्रतिदधातु महावीर इति शेषः। कर्तरि यक् छान्दसः।

२—"शं न इन्द्राग्नी। त्रिष्टुप्" इन्द्राग्नी इन्द्रावरुणौ इन्द्रापूषणौ इन्द्रासोमौ देवताः। इन्द्राग्नी अवोभिः पालनैः कृत्वा नोऽस्माकं शं सुखरूपौ भवताम्। रातं दत्तं हव्यं ययोस्तौ रातहव्यौ हविस्तृप्तौ इन्द्रावरुणौ नः शं ( सुखरूपौ ) भवताम्। वाजसातौ वाजस्यान्नस्य सातौ दाने निमित्तभूते "इन्द्रापूषणौ इन्द्रपूषसंज्ञौ देवौ नोऽस्माकं ( शं ) सुखरूपौ भवताम्। इन्द्रासोमा इन्द्रसोमौ देवौ शं सुखरूपौ भवताम्।" किमर्थम्? सुविताय सुष्ठु इतं सुवितं ( तस्मै ) साधुगमनाय साधुप्रसवाय वा। तथा शं रोगाणां शमनाय। योः यवनाय पृथक्करणाय च भयानाम्। रोगं भयं च निवर्त्य सुखरूपौ भवतामित्यर्थः। 'देवताद्वन्द्वे च' ( पा० ६।३।२६ ) इति सर्वत्र पूर्वपदस्य दीर्घः॥ ११॥

१२

शं नो देवीरभिष्टय आपो भवन्तु पीतये।
शं योरभि स्रवन्तु नः॥

* ज्योत्स्ना * [ अन्वयः ] देवीः आपः नः अभिष्टये पीतये शं भवन्तु। शं योः नः अभि स्रवन्तु।

[ हिन्दी ] *अच्छे जलकी प्रार्थना*—सुन्दर सुशोभित जल हमारे अभिषेक या इच्छित फल प्राप्ति के लिए तथा पीने के लिए सुखकारक बने। रोगों के नाश और भय के हटाने के लिए जल हमारे चारों ओर बहे। [जिस भूभाग में जांय वहां का जल रोग नाशक और भय नाशक (बलवर्द्धक तथा एकता[1] का संपादक) बने] ॥ १२ ॥

* वे० दी० * अब्देवत्या गायत्री। देवीः देव्यो दीप्यमाना आपो नोऽस्माकमिष्टये अभिषेकायाभीष्टाय वा, पीतये पानाय च शं सुखरूपा भवन्तु। अस्माकं स्नाने पाने चापः सुखयित्र्यो भवन्तु। आपः शं योः रोगाणां शमनं भयानां यवनं पृथक् करणं च अभिस्रवन्तु नोऽस्माकं भयरोगनाशं कुर्वन्तु इत्यर्थः ॥ १२ ॥

* मं० दी० * शन्नो देवीरित्यस्य व्याख्यानं श्राद्धप्रकरणे कृतम्। [ आपः नः अस्माकं पितॄणामिति शेषः। शं भवन्तु कल्याण्यो भवन्तु। किंभूताः ? देवीः, देव्यः। स्तुतिक्रीडादियोग्याः। किमर्थम्? अभिष्टये उपचयार्थं, पीतये पानार्थं च। किं च नः पितॄणां शंयोः कल्याणयोग्याय। अभिस्रवन्तु अभिमुखं स्रवन्तु। शंयोरिति शं शब्दान्मत्वर्थीयो युस्प्रत्ययः! चतुर्थ्यर्थे षष्ठी। अभिष्टय इति 'स्त्यै ष्ट्यै शब्दसङ्घातयोः' अभिपूर्वः, 'स्त्यः प्रपूर्वस्ये' ति योगविभागात्संप्रसारणं, तादर्थ्ये चतुर्थी ] ॥ १२ ॥

## १३

**स्योना पृथिवि नो भवानृक्षरा निवेशनी।**
**यच्छा नः शर्म सप्रथाः ॥**

* ज्योत्स्ना * [ अन्वयः ] हे पृथिवि! अनृक्षरा, निवेशनी, सप्रथाः, (त्वं) नः स्योना भव। नः शर्म्म यच्छ।

---

१ 'द्वितीयाद्वै भयं भवति' बृ० उ० १।४।२;

[ हिन्दी ] पृथ्वी से हमारी कामना—हे पृथिवि देवते! चोर, दुष्टभाई आदि कण्टक रहित, अच्छे मकानवाली, सब ओर से विशाल तुम हमारे लिए सुखकारक बनो। और हमें रहने के लिए स्थान देओ ॥ १३ ॥

❀ वे० दी० ❀ स्योना पृथिवि व्याख्याता। [पृथिवीदेवत्या गायत्री, हे पृथिवि! त्वं नोऽस्माकं स्योना सुखरूपा भव। किंभूता त्वम्। अनृक्षरा 'ऋक्षरः कण्टकः, ऋच्छतेः। कण्टकः कन्तपो वा कृन्ततेर्वा कण्टतेर्वा स्याद्गतिकर्मणः ( निरु० ९।३२ ) इति यास्कः। तद्ग्रहणं चौरदायादादिदुःखनिवृत्त्यर्थम्। न सन्ति ऋक्षराः कण्टकाः दुःखदायिनो यस्यां सा अनृक्षरा। तथा निवेशनी निविशन्ति जनाः यस्यां सा निवेशनी साधुप्रतिष्ठाना 'करणाधिकरणयोश्च' ( पा० ३।३।११७ ) इति ल्युट्। तथा सप्रथाः प्रथनं प्रथः विस्तारः प्रथसा सह वर्तमाना सप्रथाः सर्वतः पृथुः। किंच नोऽस्मभ्यं शर्म शरणं यच्छ देहि।—य० ३५।२१ ]।

❀ मं० दी० ❀ एतन्मन्त्रं ग्रहार्चने व्याख्यास्यते। [ हे पृथिवि! नः अस्माकं स्योना सुखरूपा भव। अनृक्षरा च भव, न विद्यते ऋक्षरो यस्याः सा अनृक्षरा। ऋक्षरः कण्टकः। निवेशनी च भव साध्वस्थितिर्भवेत्यर्थः। यच्छ नः शर्म सप्रथाः। नः अस्मभ्यं शर्म शरणं यच्छ देहि। त्वं किंभूता? सप्रथाः सर्वपृथुः ] ॥ १३ ॥

## १४

आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन।
महे रणाय चक्षसे ॥

❀ ज्योत्स्ना ❀ [ अन्वयः ] हे आपः! (यूयं) हि मयोभुवः स्थ। ताः नः ऊर्जे दधातन। महे रणाय चक्षसे 'दधातन।'

[ हिन्दी ] जल और आत्मसुख—हे जलदेवते! आप हीं सुखप्राप्त करानेवाले हैं। अतः सुखदेने के सामर्थ्य संपन्न आप

हमें अपने बलदायक रसके अनुभव के लिए रखिए। और महत्वपूर्ण सुन्दर दर्शन अर्थात् ब्रह्मसाक्षात्कार के लिए हमें रखिए ॥ १४ ॥

❀ वे० दी० ❀ आपो हि ष्ठा तृचो व्याख्यातः । [...... अब्दे-वत्यास्तिस्रो गायत्र्यः...। हि शब्दः एवार्थः प्रसिद्ध्यर्थो यस्मादर्थो वा। हे आपः ! यूयमेव मयोभुवः सुखस्य भावयित्र्यः स्थ भवथ । मयः सुखं भावयन्ति प्रापयन्ति ता मयोभुवः, यस्मात्कारणान्मयोभुवः स्थेति वा स्नान-पानादिहेतुत्वेन सुखोत्पादकत्वमपां प्रसिद्धम्, तास्तादृश्यो यूयं नोऽस्मा-नूर्जे रसाय भवदीयरसानुभवार्थं दधातन स्थापयत । 'तप्तनप्तनथनाश्च' (पा० ७।१।४५) इति लोण्मध्यमबहुवचनस्य तनबादेशे दधातनेति रूपम्। यथा वयं सर्वस्य भोग्यस्य रसस्य भोक्तारो भवेम तथास्मान्कुरुतेति भावः। किं च महे महते रणाय रमणीयाय चक्षसे दर्शनाय चास्मान्दधातनेत्यनु-वर्तते। महद्रमणीयं दर्शनं ब्रह्मसाक्षात्कारलक्षणं तदस्माकं कुरुत । अस्मान् ब्रह्मसाक्षात्कारयोग्यान्कुरुतेति भावः। ऐहिकपारलौकिकसुखं ददतेत्यृचो भावः। 'मह पूजायाम्' मह्यते पूज्यत इति मट्, क्विप् प्रत्ययः, तस्मै महे। 'रण शब्दे' रण्यते स्तूयते सर्वैरिति रणम्, तस्मै रणाय। चष्टे पश्यति सर्वं येन इति चक्षः, चक्षतेरसुन्प्रत्ययः, तस्मै चक्षसे। 'यस्मिन्ज्ञाते सर्वं विज्ञातं स्यात्' इति छान्दोग्यश्रुतेः।—य० ११।५० ]

❀ मं० दी० ❀ आपो हि ष्ठेत्यादि त्यृचं सन्ध्याप्रकरणे व्याख्यातम्। [ अत्राग्रे तच्छब्दोपादानात् यच्छब्दोऽध्याहार्यः। हे आपः या यूयं मयोभुवः स्थ, 'मय इति सुखनाम' ( निघं० ३।६ ) सुखभावयित्र्यः स्थ भवथ। सर्वप्राणिनामिति शेषः। हि शब्दोऽनर्थकः, ताः तादृश्यः यूयम् अस्मान् ऊर्जे अन्नाय ( निघं० २।७ ) दधातन स्थापयत यथा वयं सर्वस्यान्नादेः भोजका भवेम तथा कुरुतेत्यभिप्रायः। अन्नाधीनमेव सुख-मिति भावः। किंच महे महते रणाय रमणीयाय चक्षसे दर्शनाय 'चक्षिङ् संख्याने' असुन्। महद्दर्शनं ब्रह्मदर्शनन्तदर्थं, दधातन, यद्वा महते चक्षसे

दर्शनाय रणाय रमणीयाय ब्रह्मदर्शनायेत्यर्थः । अथवा हिशब्दो यस्मादर्थे । हे आपः यस्मान्मयोभुवः स्थ ताः तस्मान्नः ऊर्ज्जे दधातनेत्यन्वयः । ताः शब्दः पञ्चम्यर्थे प्रथमान्तः ] ॥ १४ ॥

१५

**यो वः शिवतमो रसस्तस्य भाजयतेह नः ।**
**उशतीरिव मातरः ॥**

* ज्योत्स्ना * [ अन्वयः ] 'हे आपः !' वः यः शिवतमः रसः (अस्ति) । इह नः उशतीः मातरः इव तस्य भाजयत ।

[ हिन्दी ] *जल से पोषण*—हे जल देवते ! आपका जो सुखकारक रस है उसका इस लोक में हमें वात्सल्य से चाहती हुई माताओं के पुत्र की भाँति भागहारी बनाइए ॥ १५ ॥

* वे० दी० * हे आपः ! वो युष्माकं यः शिवतमः शान्ततमः सुखैकहेतू रसोऽस्ति, इहास्मिन्कर्मणि इह लोके वा स्थितान्नोऽस्मान् **तस्य रसस्य भाजयत** भागिनः कुरुत । तं रसं प्रापयतेति भावः । कर्मणि षष्ठी । तत्र दृष्टान्तः **उशतीर्मातर इव** उशन्ति ता उशत्यः 'वा छन्दसि' ( पा० ६।१।१०६ ) इति दीर्घः । 'वश कान्तौ' इत्यस्माच्छतृप्रत्ययान्तात् 'उगितश्च' ( पा० ४।१।६ ) इति ङीप् । उशत्यः कामयमानाः प्रीतियुक्ता मातरो यथा स्वकीयस्तन्यरसं बालं पाययन्ति तद्वत् ॥—य० ११।५१ ]

* मं० दी० * [ हे आपः ! यश्च वः युष्माकं शिवतमः कल्याणतमो रसः । नः अस्मान् तस्य भाजयत भागिनः कुरुत । इह अस्मिन् कर्म्मणि लोकेऽवस्थितान् । उशतीरिव मातरः । उशतीः उशत्यः अत्र 'दीर्घाजसि च' 'वा छन्दसि' ( पा० ६।१।१०५-१०६ ) इति वा पूर्वसवर्णदीर्घः । कामयमाना मातर इव, 'वश कान्तौ' इति धातोः कृतसंप्रसारणस्यैतद्रूपम् । तथा च यथा पुत्रस्य कल्याणं कामयमाना मातरः स्वैस्तन्यादिरसैस्तं भाजयेयुः । एवं मां भाजयत ॥ १५ ॥

१६

तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ ।
आपो जनयथा च नः ॥

* ज्योत्स्ना * [ अन्वयः ] हे आपः ! वः तस्मै अरं गमाम, यस्य क्षयाय जिन्वथ । च नः जनयथ ।

[ हिन्दी ] *जल से तृप्ति*—हे जलदेवते ! आपके हम उस रस की तृप्ति को प्राप्त करें जिस जगत् के आधार भूत रस से समस्त जगत् को आप तृप्त करते हैं । तथा हमें उस रस के भागी बनाइए ॥ १६ ॥

* वे० दी० * [ अलमिति प्राप्ते लकारस्य रेफश्छान्दसः । हे आपः ! वो युष्मत्संबन्धिनस्तस्य ( अरं ) पर्याप्तिं वयं गमाम गच्छेम । पर्याप्तिर्नाम रसविषये वैतृष्ण्यं सदातृप्तिर्वा । तस्मै इति चतुर्थी षष्ठ्यर्थे । यस्य क्षयाय जिन्वथ 'क्षयो निवासे' ( पा० ६।१।२०१ ) इत्याद्युदात्तत्वात् क्षयशब्देन निवासः । क्षयायेति चतुर्थी षष्ठ्यर्थे । यस्येत्यनेन समानाधिकरण्यात् । क्षयस्य निवासस्य जगतामाधारभूतस्य यस्याहुतिपरिणामभूतस्य रसस्यैकदेशेन यूयं ब्रह्मादिस्तम्बपर्यन्तं जगत् जिन्वथ तर्पयथ । 'जिन्वतिः प्रीतिकर्मा' पञ्चाहुतिपरिणामक्रमेणेति भावः । (च) किं च हे आपः ! नोऽस्मान् तत्र भोक्तृत्वेन जनयथ उत्पादयत । आशिषि लोट्, तद्रसभोक्तॄनस्मान् कुरुतेत्याजानदेवत्वमाशास्यते इति भावः । 'अन्येषामपि दृश्यते' ( पा० ६।३।१३७ ) इति संहितायां दीर्घः । यद्वास्या ऋचोऽयमर्थः—यस्य क्षयाय क्षयेण निवासेन यूयं जिन्वथ प्रीता भवथ तस्मै रसाय तद्रसाप्तये वो युष्मानरमत्यर्थं वयं गमाम प्राप्नुमः । किं च हे आपः ! यूयं नोऽस्मान् जनयथ प्रजोत्पादनसमर्थान् कुरुथ । गच्छतेर्लुङि उत्तमबहुवचने गमामेति रूपम् । अडभाव आर्षः 'बहुलं छन्दसि' ( पा० २।४।७३ ) इति शपो लुकि, लोटि वा रूपम्—य० ११।५२ ]

* मं० दी० * [ हे आपः ! तस्मै तस्य रसस्य पूर्वकथितस्य वः युष्मत्संबन्धिनः । अरम् अलं पर्याप्तिं सदातृप्तिं गमाम गच्छाम । अलमिति रलयोरेकत्वस्मरणात् । यस्य क्षयाय जिन्वथ । यस्य क्षयस्य निवासस्य पञ्चाहुतिपरिणामक्रमेण ब्रह्मादिस्तम्बपर्यन्तस्य जगतः एकदेशेन जिन्वथ तर्पयथ । 'जिन्वतिः प्रीणनकर्मा' । हे आपः नः अस्मान् जनयथ भोक्तृत्वेनेति शेषः । ] ॥ १६ ॥

[ इति शान्त्यध्याये प्रथमोऽनुवाकः ]

१७

द्यौः शान्तिरन्तरिक्षꣳ शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः । वनस्पतयः शान्तिर्विश्वेदेवाः शान्तिर्ब्रह्म शान्तिः सर्वꣳ शान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि ॥

* ज्योत्स्ना * [ अन्वयः ] द्यौः शान्तिः, अन्तरिक्षं शान्तिः, पृथिवी शान्तिः, आपः शान्तिः, ओषधयः शान्तिः, वनस्पतयः शान्तिः, विश्वेदेवाः शान्तिः, ब्रह्म शान्तिः, सर्वं शान्तिः, शान्तिः एव शान्तिः, सा शान्तिः मा एधि ।

[ हिन्दी ] *शान्ति की कामना*—द्युलोक अन्तरिक्ष पृथिवी जल ओषधि (अन्न) वनस्पति समस्तदेवता ब्रह्म और सब में शान्ति है। शान्ति के संग्रह द्वारा ही 'शान्ति मिल सकती है'। वह शान्ति मुझे प्राप्त होवे ॥ १७ ॥

* वे० दी० * यजूंषि 'संदृशि जीव्यास' ( १७–१९ ) मित्यन्तानि । एकाधिका शक्करी । द्यौः द्युलोकरूपा या शान्तिः, अन्तरिक्षरूपा च या शान्तिः, पृथिवी भूलोकरूपा या शान्तिः, आपो जलरूपा या शान्तिः, ओषधयः ओषधिरूपा या शान्तिः, वनस्पतयः वृक्षरूपा या शान्तिः, विश्वेदेवाः सर्वदेवरूपा या शान्तिः, ब्रह्म त्रयीलक्षणं परं वा तद्रूपा या शान्तिः, सर्वं सर्वजगद्रूपा या शान्तिः, शान्तिरेव शान्तिः

या स्वरूपतः शान्तिः, सा शान्तिः मा मां प्रति एधि अस्तु। पुरुषव्यत्ययः। महावीरप्रसादात् सर्वं शान्तिरूपं मां प्रत्यस्त्वित्यर्थः। यद्वा द्यौरित्यादिषु विभक्तिव्यत्ययः। सप्तम्यर्थे प्रथमा। दिव्यन्तरिक्षे पृथिव्यामप्स्वोषधिषु वनस्पतिषु विश्वेदेवेषु ब्रह्मणि सर्वस्मिंश्च या शान्तिः सा मां प्रत्यस्त्वित्यर्थः॥ १७॥

❀ मं० दी० ❀ द्यौः शान्तिरित्यग्रे व्याख्यास्यते। [ सर्वारिष्टोपशमः अस्माकमस्त्वित्यध्याहार्यम्। तथा अन्तरिक्षं शान्तिरस्तु। ब्रह्मादयः शान्तिः। शान्तयः सन्तु। अत्र सर्वत्र च द्यौः प्रभृतिभिः शान्तिरित्यन्तैः पदैः तत्र स्वर्गाधिष्ठात्र्यो देवता अस्माकमरिष्टोपशमनपूर्वकमभीष्टसम्प्रदानाय भवन्त्वित्याशंसावाक्यार्थः। आपः शान्तिरित्यादिषु 'सुपां सुपो भवन्ती' ति बहुवचनम् ]॥ १७॥

## १८

दृते दृꣳह मा मित्रस्य मा चक्षुषा सर्वाणि भूतानि समीक्षन्ताम्।
मित्रस्याहं चक्षुषा सर्वाणि भूतानि समीक्षे।
मित्रस्य चक्षुषा समीक्षामहे॥

❀ ज्योत्स्ना ❀ [ अन्वयः ] दृते! मा दृंह। सर्वाणि भूतानि मा मित्रस्य चक्षुषा समीक्षन्ताम्। अहं सर्वाणि भूतानि मित्रस्य चक्षुषा समीक्षे। मित्रस्य चक्षुषा समीक्षामहे।

[ हिन्दी ] *सब प्राणियोंसे मित्रभाव*—हे महावीर!-बुढ़ापे के जर्जरित शरीर में भी मुझे दृढ़ रखो। समस्त प्राणी मुझे मित्र की दृष्टि से देखें। और मैं भी समस्त प्राणियों को मित्र की दृष्टि से देखूं। इस प्रकार हम सब मित्र की दृष्टि से देखते रहें॥१८॥

❀ वे० दी० ❀ } ❀ मं० दी० ❀ } दृते! 'दृ विदारे' विदीर्णे जराजर्जरितेऽपि शरीरे, हे महावीर! मा मां त्वं दृंह दृढीकुरु। यद्वा दृते विदीर्णे कर्मणि मां दृंह अच्छिद्रं कर्म कुरु। यद्वा ससुषिरत्वात् सेक्तृ-

त्वाच्च हतिशब्देन महावीरः। हे हते ! महावीर मां दृंह दृढ़ीकुरु। कथं दार्ढ्यं, तदाह—**सर्वाणि भूतानि** प्राणिनो **मा मां मित्रस्य चक्षुषा समीक्षन्तां** सम्यक् पश्यन्तु मित्रदृष्ट्या सर्वे मां पश्यन्तु नारिदृष्ट्या, सर्वेषां प्रियो भूयासमित्यर्थः। किंच **अहमपि सर्वाणि भूतानि मित्रस्य चक्षुषा समीक्षे** पश्यामि, सर्वे मे प्रियाः सन्तु। मित्रस्य चक्षुः शान्तं भवति। मित्रः कंचन न हन्ति मित्रं च कश्चन न हन्ति। एवं परस्परा-द्रोहेण सर्वानहिंसन्तो **मित्रस्य चक्षुषा** वयं **समीक्षामहे** पश्यामः ॥१८॥

१९

**हते दृꣳह मा।**
**ज्योक्ते सन्दृशि जीव्यास, ज्योक्ते सन्दृशि जीव्यासम् ॥**

* ज्योत्स्ना * [ अन्वयः ] **हते ! मा दृंह। ते सन्दृशि (अहं) ज्योक् जीव्यासम्। ते सन्दृशि (अहं) ज्योक् जीव्यासम् ॥**

[ हिन्दी ] *वृद्धावस्था में भी बल और दीर्घायुष्य की इच्छा*—**हे महावीर ! जराजीर्ण शरीर की अवस्था में भी मुझे दृढ़ बनाओ। तुम्हारे सामने मैं बहुत दिनों तक जीऊँ। तुम्हारे सामने मैं बहुत दिनों तक जीऊँ ॥ १९ ॥**

* वे० दी० * / * मं० दी० * } **हे हते !** ( महा ) वीर ! **मां दृंह** आदरार्थं पुनर्वचनम्। हे महावीर **ते** तव **संदृशि** संदर्शने अहं **ज्योक्** चिरं **जीव्यासम्** जीवेयम्। जीवेराशीर्लिङि रूपम्। ज्योगिति निपातश्चिरार्थः। पुनरुक्तिरादरार्था। ते **संदृशि ज्योग्जी-व्यासम्** ॥ १९ ॥

२०

**नमस्ते हरसे शोचिषे नमस्ते अस्त्वर्चिषे।**
**अन्याँस्ते अस्मत्तपन्तु हेतयः पावको अस्मभ्यꣳ शिवो भव ॥**

* ज्योत्स्ना * [ अन्वयः ] ( हे अग्ने ! ) ते हरसे शोचिषे नमः 'अस्तु'। ते अर्चिषे नमः अस्तु। ते हेतयः अस्मत् अन्यान् तपन्तु पावकः ( त्वं ) अस्मभ्यं शिवः भव ॥

[ हिन्दी ] *अग्नि का प्रभाव*—हे अग्ने ! तुमारे सब रसों को खींचने वाले तेज के लिए नमस्कार है। तुमारे प्रकाशक तेज के लिए नमस्कार है। तुम्हारी ज्वालाएँ हमारे अलावा दूसरे हमारे विरोधियों को तपावें। पवित्र बनानेवाले आप हमारे लिए शान्त बनिये ॥ २० ॥

* वे० दी० * नमस्ते व्याख्याता। [ आग्नेयी बृहती…। हे अग्ने ते तव शोचिषे शोचनहेतवे तेजसे नमोऽस्तु। कीदृशाय शोचिषे। हरसे हरति सर्वरसानिति हरः तस्मै। हरतेरसुन्प्रत्ययः। ते तव अर्चिषे पदार्थ-प्रकाशकाय तेजसे नमोऽस्तु। अन्यदुक्तम्।—य० १७।११; ते तव हेतयो ज्वालाः अस्मत् सकाशादन्यान् अस्मद्विरोधिनः पुरुषान् तपन्तु क्लेश-यन्तु। अस्मभ्यमस्मदर्थं पावकः शोधकः शिवः शान्तश्च भव। —य० १७।७; ]

* मं० दी० * ऋषिपुत्री लोपामुद्रा ऋषिः, अग्निर्देवता, बृहती छन्दो महावीरशान्तिकरणे विनियोगः। अयमर्थः—हे अग्ने ! तुभ्यं नमः अस्त्वित्युत्तरत्रावस्थितमत्रापि योज्यम्। किंभूताय तुभ्यम् ? हरति सर्वदुःख-मिति हरः तस्मै हरसे। पुनः किंभूताय ? शोचिषे दीप्तिकारिणे। तथा अर्चिषे अर्चिर्ज्वाला तद्रूपाय। ते तुभ्यं नमोऽस्तु। किमर्थम्—ते तव हेतयः ज्वालाः अस्मत्सकाशादन्यानस्मद्विरोधिनः विरुद्धांस्तपन्तु दहन्तु। न केवलमेवं किन्तु त्वं पावकः शोधकः सन्नस्मभ्यं शिवः कल्याणो भव इत्येतदर्थं च नमस्कृतोऽ-ग्निः अस्माकं विरुद्धान् दहत्वस्माकं कल्याणाय भवत्वित्याशंसावाक्यार्थः। अत्र हरसे 'हृञ् हरणे' इत्यस्य 'सर्वधातुभ्योऽसुन्' त्यसुन् ॥ २० ॥

२१

नमस्ते अस्तु विद्युते नमस्ते स्तनयित्नवे ।
नमस्ते भगवन्नस्तु यतः स्वः समीहसे ॥

❀ ज्योत्स्ना ❀ [ अन्वयः ] हे भगवन्! विद्युते ते नमः अस्तु। स्तनयित्नवे ते नमः 'अस्तु'। यतः स्वः समीहसे ( अतः ) ते नमः अस्तु ॥

[ हिन्दी ] नमस्कार—हे भगवन्! विद्युत्स्वरूप आपके लिए नमस्कार होवे। मेघगर्जना के स्वरूप आपके लिए नमस्कार होवे। आप स्वर्ग जाने की चेष्टा कराते हैं। इसलिए आपको नमस्कार है ॥ २१ ॥

❀ वे० दी० ❀ द्वे अनुष्टुभौ विद्युत्स्तनयित्नुरूपभगवद्देवते। हे भगवन्! महावीर! विद्युते विद्युद्रूपाय ते तुभ्यं नमोऽस्तु। स्तनयित्नवे स्तनयित्नुर्गर्जितं तद्रूपाय ते नमोऽस्तु। यतः कारणात् स्वः स्वर्गं गन्तुं त्वं समीहसे चेष्टयसे अतस्ते तुभ्यं नमोऽस्तु ॥ २१ ॥

❀ मं० दी० ❀ दध्यङ्ङाथर्वण ऋषिरनुष्टुप्छन्द इन्द्रो देवता वीरशान्तिकरणे विनियोगः। अयमर्थः—हे रुद्र! ते तुभ्यं नमः अस्तु। किंभूताय? विद्युते विद्युद्रूपाय, तथा स्तनयित्नवे मेघरूपाय ते तुभ्यं नमः। हे भगवन्! सकलैश्वर्यसाधिन्! ते तुभ्यं नमः। केन कारणेन त्वं नमस्क्रियसे? यतः कारणात् स्वः स्वर्गं दातुं समीहसे चेष्टसे। दातुमित्यध्याहारः। हे इन्द्र! त्वं यतो यतः कारणात्स्वर्गार्थिनां स्वर्गं ददासि अतस्तुभ्यं विद्युद्रूपाय ईश्वराय नमोऽस्त्विति वाक्यार्थः ॥ २१ ॥

२२

यतो यतः समीहसे ततो नो अभयं कुरु ।
शं नः कुरु प्रजाभ्योऽभयं नः पशुभ्यः ॥

❀ ज्योत्स्ना ❀ [ अन्वयः ] 'हे भगवन् !' यतः यतः समीहसे। ततः नः अभयं कुरु। नः प्रजाभ्यः शं कुरु। नः पशुभ्यः अभयं 'कुरु'।

[ हिन्दी ] *अभय की प्रार्थना*—हे भगवन्! जिस जिस अकर्तव्य से हमें हटाना चाहते हैं उससे हमें अभय बनाइए, अर्थात् उस अकर्तव्य का हमारे भीतर आक्रमण ही न होने पावे। आप हमारी पुत्र-भृत्य आदि प्रजाओं के लिए सुखकारक बनें। तथा हमारे गो अश्व आदि पशुओं के लिए भी अभय करें ॥२२॥

❀ वे० दी० ❀ हे महावीर ! यतो यतः यस्माद् यस्माद् दुश्चरितात्त्वं समीहसे अस्मास्वपकर्तुं चेष्टसे ततस्ततो नोऽस्माकमभयं कुरु। किंच नोऽस्माकं प्रजाभ्यः शं सुखं कुरु। नोऽस्माकं पशुभ्यश्चाभयं भीत्यभाव कुरु ॥ २२ ॥

❀ मं० दी० ❀ दध्यङ्ङाथर्वण ऋषिरिन्द्रो देवता त्रिष्टुप्छन्दो महावीरशान्तिकरणे विनियोगः। हे इन्द्र ! यतो यतः यस्माद्यस्मात्कृतादुपचारादस्माकमभयं कर्तुं समीहसे चेष्टसे ततस्तस्मान्नोऽस्माकं प्रजाभ्यः शं सुखं कुरु। तथा नः पशुभ्यो गवादिभ्योऽभयं कुर्विति पूर्वेणैव संबन्धः। अस्माकं त्वदुपचारं प्राप्याभयाय तदस्माकमस्मत्पुत्रादीनां गवादीनां चाभयं कुर्विति याच्ञावाक्यार्थः ॥ २२ ॥

## २३

**सुमित्रया न आप ओषधयः सन्तु दुर्मित्रियास्तस्मै सन्तु योऽस्मान् द्वेष्टि यं च वयं द्विष्मः ॥**

❀ ज्योत्स्ना ❀ [ अन्वयः ] आपः ओषधयः नः सुमित्रियाः सन्तु। यः अस्मान् द्वेष्टि वयं च यं द्विष्मः तस्मै दुर्मित्रियाः सन्तु।

[ हिन्दी ] *ओषधियोंसे शुभकामना*—जल और ओषधियां हमारे

लिए अच्छे मित्र की भांति सुखप्रद बनें। जो हमसे वैर करता है या हम जिससे वैर करते हैं उसके लिए जल और ओषधियां शत्रुकी भांति अनिष्टकारक बनें ॥ २३ ॥

❀ वे० दी० ❀ यजुः व्याख्यातम्। [सुमित्रिया: आपः ओषधयश्च नोऽस्माकं सुमित्रियाः साधुमित्रत्वेनावस्थिताः सन्तु। यः शत्रुरस्मान् द्वेष्टि वयं च यं शत्रुं द्विष्मः द्वेषं कुर्मः, तस्मै उभयात्मकाय शत्रवे आप ओषधयश्च दुर्मित्रियाः अमित्रत्वेनावस्थिताः सन्तु।—य० ६।२२; ] ॥ २३ ॥

❀ मं० दी० ❀ दध्यङ्ङाथर्वण ऋषिरापो देवता यजुः, छन्दो नास्ति, महावीराद्यन्तयोः शान्तिकरणे विनियोगः। अयमर्थः—आप ओषधयश्च नोऽस्माकं सुमित्रियाः सन्तु। योऽस्मान्द्वेष्टि अस्मासु द्वेषं करोति, यं वयं द्विष्मः यस्मिन्वयं द्वेषं कुर्मस्तस्मै दुर्मित्रियाः सन्तु। आपो ब्रह्मादयश्चास्माकं साधु मित्रवदभीष्टकारिण्यो भवन्तु। अस्मच्छत्रूणां दुष्टामित्रवद्विरोधिन्य आपो भवन्तु इत्याशंसावाक्यार्थः ॥ २३ ॥

२४

तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत्।
पश्येम शरदः शतं जीवेम शरदः शतꣳशृणुयाम शरदः
शतं प्रब्रवाम शरदः शतमदीनाः स्याम शरदः शतं
भूयश्च शरदः शतात् ॥ २४ ॥

❀ ज्योत्स्ना ❀ [ अन्वयः ] तत् देवहितं शुक्रं चक्षुः पुरस्तात् उच्चरत्। ( तस्य प्रसादात् ) शरदः शत पश्येम। शरदः शतं जीवेम। शरदः शतं शृणुयाम। शरदः शतं प्रब्रवाम। शरदः शतम् अदीनाः स्याम। च शरदः शतात् भूयः 'पश्येम, जीवेम शृणुयाम, प्रब्रवाम, अदीनाः स्याम'।

[ हिन्दी ] *विशेष प्रार्थना*—स्तुति किया हुआ, देवताओंका हितकारक तेजस्वी सूर्यरूप नेत्र, पूर्व की ओर उदित होरहा है। इसकी कृपा से हम सौ वर्ष तक देखें। सौ वर्ष तक स्वतन्त्रता से जीवें। सौ वर्ष तक सुनें। सौ वर्ष तक अदीन रहें। सौ वर्ष के बाद भी देखें जीवें सुनें बोलें और अदीन रहें ॥ २४ ॥

❀ वे० दी० ❀ सूर्यदेवत्या ब्राह्मी त्रिष्टुप् एतैर्मन्त्रैर्यो महावीरोऽस्माभिः स्तुतः तत् चक्षुर्जगतां नेत्रभूतमादित्यरूपं पुरस्तात् पूर्वस्यां दिशि उच्चरत् उच्चरति उदेति। 'इतश्च लोपः परस्मैपदेषु' ( पा० ३।४।९७ ) इति इकारलोपः। कीदृशं तत्। देवहितं देवैर्हितं स्थापितं, यद्वा देवानां हितं प्रियं शुक्रं शुक्लं पापासंसृष्टंशो चिष्मद्वा। तस्य प्रसादात् शतं शरदः वर्षाणि वयं **पश्येम** शतवर्षपर्यन्त वयमव्याहतचक्षुरिन्द्रिया भवेम। प्रार्थनायां लिङ् अत्यन्तसंयोगे द्वितीया। शतं शरदः जीवेम अपराधीनजीवना भवेम। शतं शरदः शृणुयाम स्पष्टश्रोत्रेन्द्रिया भवेम। शतं शरदः प्रब्रवाम अस्खलितवागिन्द्रिया भवेम। शतं शरदः अदीनाः स्याम न कस्याप्यग्रे दैन्यं कुर्याम। शतात् शरदः शतवर्षोपर्यपि भूयश्च बहुकालम् पश्येमेत्यादि योज्यम् ॥ २४ ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे।
अध्यायः शान्तिपाठार्थः षट्त्रिंशोऽयं प्रकाशितः ॥

❀ मं० दी० ❀ दध्यङ्ङाथर्वण ऋषिः सूर्यो देवता उष्णिक्छन्दो महावीराद्यन्तयोः शान्तिकरणे विनियोगः। अयमर्थः तच्चक्षुः चक्षुरिव त्रैलोक्यप्रकाशकमादित्यमण्डलमित्यर्थः। तत्किंभूतं ? देवहितम्। पुनः किंभूतं ? पुरस्तात् उच्चरत् प्राच्यामुद्यत्। पुनः किंभूतं ? शुक्रं शुक्लं निर्मलमिति यावत्। तस्मादादित्यदर्शनाद्वयं शरदः शतं शृणुयामो यः सर्ववेदमयश्चादित्यः प्रत्यहं प्राच्यामुदितस्तत्प्रसादेन वयमविकलेन्द्रियाः शतं वर्षाणि जीवेम। एवं प्रब्रवामादेरर्थो ज्ञातव्य इत्याशंसावाक्यार्थः ॥ २४ ॥

[ इति शान्त्यध्याये द्वितीयोऽनुवाकः ]

## अध्यायसार

* ज्योत्स्ना * अथर्वणके पुत्र दध्यङ् महर्षिके द्वारा देखे गए इस शान्त्यध्याय में अनेक देवताओं से शान्ति अभय स्वस्थता आदि जीवनोपयोगी इच्छाओंकी प्राप्तिके लिए प्रार्थना कीगई है। इस अध्यायके मननसे शान्तिके सफल उपाय परिज्ञात होतेहैं। शान्त्यध्यायके मन्त्रोंके द्वारा हमें शिक्षा मिलती है कि–मनुष्य को शान्तिकी प्राप्तिके लिए अपने मन वाणी प्राण इन्द्रियोंकी महत्ता समझकर उसका सदुपयोग करना चाहिए, तथा इनके द्वारा प्राप्त होनेवाले बल प्रभाव धीरज आदि गुणोंको भी संयत एवं सुव्यवस्थित रखना चाहिए। वाणीको ऋग्वेद, मनको यजुर्वेद, प्राणको सामवेद, इन्द्रियोंको परस्पर सहयोगी सद्भावनासंपन्न देवता समझना चाहिए। हृदयकी कमजोरी मानसिक दुर्बलता और इन्द्रियोंकी शक्तिक्षीणताको दूर करनेके लिए समस्त भुवनके अधिपति ज्ञान देवताकी विचार द्वारा शरण लेनी चाहिए। बुद्धि को दूसरों द्वारा सराहनीय, आपत्तिनाशक, निर्मल, स्फूर्ति सम्पन्न बनानेकी चेष्टा रखनी चाहिए। पूज्यता और अभ्युदय के लिए दूसरों के साथ इस बात का सर्वदा ध्यान रखना चाहिए कि वह किस उचित आदान-प्रदान और व्यवहारसे हमारा सहायक बनसकता है। और वह कैसे अपनी हार्दिक अमूल्य सहयोग निधि को न्यौछावर कर सकता है। अपने मित्रों एव सहयोगियों को कष्ट तथा आपत्ति से बचाने का सर्वदा ध्यान रखना चाहिए। अपने पूज्यजन तथा अभिभावकवर्ग की प्रसन्नता के द्वारा उनसे लाभ उठानेके लिए योग्यकर्तव्य का विचार करते रहना चाहिये। इस प्रकार विचारपूर्वक कार्य करनेवाला व्यक्ति ऐश्वर्य सम्पन्न हो जाता है। धन-धान्य-पशु आदि समृद्धिका पात्र, मित्रोंका प्रिय, छोटी श्रेणीके व्यक्तियोंका आश्रय, बड़ों का

कृपाभाजन, विद्वानोंका आशीर्वाद पात्र, प्रगतिशील कार्य कर्ताओं में प्रमुख बन जाता है उसका अहोरात्र सुखसे बीतता है। सबको बलवर्धक मन्द और निर्दुष्ट जल वायु. सहनेयोग्य धूप (सूर्य का ताप) शुद्ध एवं पुष्टजलसे उत्पन्न अन्नका उपयोग, करते रहना चाहिए। किसी किसी जलमें बल, आध्यात्मिकभावकी जागृति, प्रेमभाव, एवं सौजन्यके तत्व निहित रहते हैं उस जलका उपयोग और अभिवर्द्धन करना चाहिए। निवासभूमि सुखद रमणीय निष्कण्टक विस्तीर्ण बनानी चाहिए। सर्वाधिकरूप से वाञ्छित शान्ति को द्युलोक अन्तरिक्ष पृथिवी, ओषधी, वनस्पति, देवता, वेद, आदि समस्त पदार्थोंका अध्ययन करके प्राप्त करना चाहिए। सभी शान्तिमय है और शान्तिप्रद हैं। उनसे शान्ति को प्राप्त करना विचार और कर्तव्य के अधीन है। शान्ति मिलने का सरल और सुदृढ़ उपाय यह है कि हम सब प्राणियों में परस्पर मित्रभाव रहे, इसके लिए हमारे द्वारा सबसे पहिले मित्रभाव का बरताव होना चाहिए। मित्रभाव के प्रसार से जीवन में दृढ़ता, वृद्धि और गुणग्राहिता का संचार होगा जिससे विशिष्ट व्यक्तियों के वैशिष्ट्य पर कृतज्ञता के कारण हमारा शिर झुका करेगा। और इस आदर्श से हमें सब से अभय मिलेगा। जड़ चेतन सभी हमारे सहायक होगें। हम परस्पर एक दूसरे को कर्तव्यनिष्ठ देखकर प्रेमपूर्वक यह कहेगें कि यह हमारे देश समाज एवं विश्व का हित करने वाला निर्मल द्रष्टा उदित हो रहा है। इसके साथ हम सौ वर्ष तक देखें सुनें बोलें और स्वतन्त्रता पूर्वक आदर्श जीवन बितावें।

*शान्त्यध्यायो यजूरत्नं वेद-रत्नाकरोद्धृतम् ।*
*मिश्र-गोपालचन्द्रस्य ज्योत्स्नया राजतां हृदि ॥*

॥ इति शुक्लयजुर्वेदीयः शान्त्यध्यायः समाप्तः ॥

ज्योत्स्नाविवृत्या, पीयूषभाष्येण च समुद्भासितम्,

अथर्ववेदीयम्,

# पृथिवीसूक्तम्

[ शौनकसंहितायाः द्वादशे काण्डे प्रथमं सूक्तम्,
पैप्पलादसंहितायाश्च सप्तदशे काण्डे प्रथमोऽनुवाकः ]

# पृथिवीसूक्तम्

## [ अथर्ववेदीयम् ]

❀ ज्योत्स्ना ❀

*पार्थिवं सूक्तरत्नं श्रीगुर्वर्क-ज्ञानभा-वतः ।*
*मिश्र-गोपालचन्द्रस्य ज्योत्स्नया संविभूष्यते ॥*

### सूक्तपरिचयः

पृथिवीसूक्तमिदमथर्ववेदस्य शौनकीयसंहितायां द्वादश-काण्डान्तर्गतं प्रथमं सूक्तम् । प्रपाठकनिर्देशक्रमेण षड्विंशे प्रपाठके प्रथमेऽनुवाके प्रथम सूक्तम् । पैप्पलादसंहितायां त्विदं सप्तदशे काण्डे प्रथमोऽनुवाकः । कृष्णयजुर्वेदीयायां मैत्रायणी-यसंहितायां तु केवलं पञ्चैव ऋच एतत्सूक्तस्य समुपलभ्यन्ते । न च तत्र सूक्तत्वेन तासामृचामध्ययनमित्यथर्ववेदीयमेवेदं प्रसिद्धम् । 'भूमि' शब्दस्य पृथिवीसमानार्थकत्वादिदं भूमि-सूक्तमित्यपि कथ्यते । अत्र त्रिषष्टि [६३] मन्त्राः ।

एकः पर्यायः । वास्तोष्पतीयो गणः, तत्रेदं चतुर्थं[1] सूक्तम् । षड्विंशत्युत्तरं शतम् [ १२६ ] अवसानानि चात्र सन्ति ।

---

१ 'इहैव ध्रुवाम् ( ३।१२ ) एह यातु ( ६।७३ ) यमो मृत्युः ( ६।९३ ) सत्यं बृहत् ( १२।१ ) इत्यनुवाको वास्तोष्पतीयानि' ( कौ० सू० १।८।२३ )

## ऋषिपरिचयः

एतस्य पृथिवीसूक्तस्य अथर्वा ऋषिः। अथर्ववेदे शौनकसंहितायां अथर्वणा महर्षिणा दृष्टानि चतुर्नवत्युत्तरं शतं [ १९४ ] सूक्तानि ऋग्द्वयं च समुपलभ्यन्ते। एतेषु सङ्कलनया एकंसहस्रं षट्शतानि चत्वारिंशच्च [ १६४० ] मन्त्रा भवन्ति। सङ्ख्यायामस्यामथर्वाङ्गिरसा, अथर्वाचार्येण, विकल्पविधया समुपदिष्टेनाथर्वणा च दृष्टा मन्त्रा न समवेताः। निर्विशेषितस्य अथर्वण एवात्र दृष्टानां मन्त्राणां गणना प्रदत्तास्ति। एवं दण्डकस्थले दण्डकानामेव मन्त्रत्वमुररीकृत्य कृतोऽस्ति सङ्ख्यानिर्देशः।

इतिवृत्तम्—अथर्वा इत्यासीत्कश्चन महानृषिः। ऋषिरयमत्यन्तं स्थिरप्रकृतित्वात् 'अथर्व' शब्देन सर्वैरपि व्यवह्रियते स्म। अत एव भगवान् यास्कः-'थर्वतिश्चरतिकर्मा तत्प्रतिषेधः' ( निरु० ११।१७ ) इत्यथर्वपदं निर्ब्रुवन्नेतस्य स्थिरप्रकृतित्वं ज्ञापयति। अयं हि कस्मिंश्चित्कल्पे ब्रह्मणः सर्वज्येष्ठः पुत्रः समभवत्। सर्वजगदुत्पादकः सर्वविद्यानामग्रणीश्च ब्रह्मा 'अथर्व' नाम्ने एतस्मै स्वज्येष्ठतनयायातिविशिष्टां ब्रह्मविद्यां सर्वप्रथममुवाच। वाजिनां ब्रह्मविद्याचार्यपरम्परासु 'दैव्योऽथर्वा' इत्यस्ति महर्षिः। दैव्येनाथर्वणा च सनगोः सकाशाद् ब्रह्मविद्या समवाप्तेति च ते तत्रैवामनन्ति। तदिदं कल्पभेदेन व्यवस्थापयितुं शक्यते। सोऽयमथर्वा प्रजापतेः प्रियतम आसीदिति तैत्तिरीयगाथासु विज्ञातं भवति। यतो हि प्रजानां सृष्टिसमनन्तरमपगतवीर्यमात्मानं मत्वा तपस्तप्त्वा वीर्यमवापि प्रजापतिना। अवाप्तं च महत्तद्वीर्यं प्रजापतिना धारयितुमशक्यमभूदिति तद् गोरूपतामापेदे। अथ च कदाचिद् गौः प्राच्यां दिश्युदक्रामदिति

तं निगृह्णानः प्रजापतिः 'अथर्व[1] पितुं मे गोपायेति' सर्वप्रथममुवाचेति । अथर्वण ऋषेर्वाचकः शब्दो नान्तः अदन्तश्चेत्युभयविधोऽप्युपलभ्यते । एतेनैवाथर्वणा सर्वप्रथमं निर्मन्थ्येनाग्निः प्रादुष्कृतोऽस्ति । एतस्य हि दध्यङ्नामापत्यम्, अङ्गिराश्च शिष्य आसीदिति दिक् ।

## छन्दः परिचयः

पृथिवीसूक्तेऽस्मिन्नानाछन्दस्का मन्त्राः सन्ति । प्रतिमन्त्रं च छन्दसामुल्लेखः पीयूषकणिकायां यथास्थानं कृत एवेति तत एवावगन्तव्यमिति ।

## देवतापरिचयः

सूक्तस्यास्य पृथिवी देवता । यद्यपि 'तिस्रो वा इमाः पृथिव्यः, इयमिहैका द्वे अस्याः परे' ( श०ब्रा०५।१।५।२१ ) इत्यादिश्रुतिषु स्पष्टमुक्तेर्लोकत्रयस्थानित्वं पृथिव्याः सिद्ध्यति । अत एव च निघण्टौ तत्तत्स्थानिकदेवतासु पृथिव्या नाम पठितं दृश्यते । परमेतस्य सूक्तस्य प्रथमलोकस्थानिकदेवतात्वमेवास्ति, तथाविधस्तुत्यवगमात्, सर्वानुक्रमण्यां 'सत्यं बृहदिति त्रिषष्टिरथर्वा भौमं त्रैष्टुभम्' इति भौमत्वोक्तेश्च । भूमिरित्यस्मन्निवासभूतायाः पृथिव्या एव नामधेयम् । ब्राह्मणग्रन्थेषु हि भूरिति महाव्याहृत्या भूमेः सृष्टिः, भूम्याश्च प्रजापतिकर्तृकप्रथनक्रियायोगात्पृथिवीत्वमाम्नायते । कर्तारमनभ्युपगम्यापि दर्शनेनास्याः पृथुत्वात्पृथिवीत्वं सिद्ध्यत्येवेति नैरुक्ता अभिप्रयन्ति । भूमिशब्दो हि भवत्यस्यां सर्वमित्यर्थे 'भू सत्तायाम्' धातोः 'भुवः कित्' ( उ० २७७ ) इति मिप्रत्यये, अभूदस्यां सर्वमिति

१ हे अथर्व ! मे मम पितुं अन्नं तत्साधिकां गामिति भावः । गोपाय रक्ष । अथर्वो ह्ययं दक्षिणाग्निरिति याज्ञिका भाष्यकृतः ।

भूतार्थे वा 'भूतेऽपि दृश्यन्ते' ( पा० ३।३।२ ) इति वचनात् मिप्रत्यये सिद्ध्यति। एतस्मादेव च 'कृदिकारादक्तिनः' ( पा० ४।१।४५ ग० ) इति ङीषि दीर्घान्तो भूमीशब्दोऽपि भवतीति व्याख्यासुधाकृतः। पृथिवीशब्दश्च 'प्रथ विस्तारे' धातोः 'प्रथेः षिवन् संप्रसारणं च' ( उ० १५६ ) इत्यौणादिके षिवन् प्रत्यये षित्वात् 'षिद्गौरादिभ्यश्च' ( पा० ४।१।४१। ) ति ङीषि निष्पद्यते। षवन्प्रत्ययो भवतीति 'पृथवी' शब्दोऽपि साधुरित्येके। पृथ्वीशब्दे तु 'प्रथि-म्रदि-भ्रस्जां संप्रसारणं सलोपश्च' ( उ० २८ ) इति कुप्रत्ययः। वेदे बहुत्र तदेतस्याः पृथिव्या मातृत्वं, मनुष्याणां भरणकर्तृत्वं, अन्यलोकानां पोषयितृत्वं च श्रूयते। निघण्टौ च पृथिव्या एकविंशतिर्नामानि पठ्यन्ते यथा—'गौः। ग्मा। ज्मा। क्ष्मा। क्षा। क्षमा। क्षोणिः। क्षितिः। अवनिः। उर्वी। पृथ्वी। मही। रिपः। अदितिः। इळा। निर्ऋतिः। भूः। भूमिः। पूषा। गातुः। गोत्रा।' ( नि० १।१ ) इति। पौराणिकाश्च सेयं भगवता वराहेण जलमध्यादुद्धृतेति निरूपयन्ति। तदिदं पौराणिकरूपकं 'एमूषवराह' नाम्ना वायुना गुरुत्वाज्जलमध्ये पतन्ती विधृता तिष्ठतीति निर्णयेन विज्ञानविदां नये न विरुध्यते। स्मार्तयाज्ञिका हि पृथिवीदेवतायाः पौरुषविध्यम्-

'चतुर्भुजां शुक्लवर्णां कूर्मपृष्ठोपरिस्थिताम्।
शङ्खपद्मधरां चक्रशूलहस्तां धरां भजे ॥' इति विशेषतः स्मरन्तीति दिक्।

*विनियोगपरिचयः*

भाष्यकृता सायणाचार्येण सूक्तेऽस्मिन् भाष्यमनुल्लिख्य सूक्तादौ विनियोगमात्रं प्रतिपादितम्। पीयूषभाष्ये तु सविवरणं सायणाचार्यनिर्दिष्टविनियोगेभ्योऽन्येऽपि बहवो विनियोगाः

उक्ताः । परमत्र सायणीयविनियोगानामेव पूर्वं सङ्गृहीतत्वात्तथैव त एव निर्दिश्यन्ते ।

**गणविनियोगः**—इदं सूक्तं वास्तोष्पत्यगणे पठितम् [ १ ] एतेन गणेन नवशालावास्तुसंस्कारार्थं शालाभूमिं हलेन कर्षेत् । [ २ ] तथा यत्र यत्र चतुर्गणी महाशान्तिः शान्त्युदकादौ प्रयुज्यते तत्र सर्वत्रास्य विनियोगः ।

**सूक्तविनियोगः**—[ १ ] आग्रहायणीकर्मणि रात्रौ अभ्यातानान्तं कृत्वा अयश्चरवः श्रपयितव्याः । ततोऽनेनानुवाकेनाग्नेः पश्चाद् गर्ते दर्भानास्तीर्यैकं चरुं सकृत् सर्वंहुतं जुहोति । द्वितीयं चरुमनेनानुवाकेन संपात्याभिमन्त्र्याश्नाति । तृतीयं चरुं 'सत्यं बृहत्' [ १–७ ] इत्याद्याभिः सप्तभिर्ऋग्भिः 'भूमे मातः' [ ६३ ] इत्यष्टम्या ऋचा च त्रिर्जुहोति। अष्टानामृचामावृत्त्या होमत्रयं सम्पादनीयमित्यर्थः । अग्नेः पश्चाद्दर्भेषु कशिपु तृणमयं प्रस्तरमास्तीर्य 'विमृग्वरीम्' [ २९ ] इत्यनयोपविशति। 'यास्ते शिवाः' [ ६. २. २५ ] इति संविशति । 'यच्छयानः' [ ३४ ] इति पर्यावर्तते । 'सत्यं बृहत्' [१-६]इति नवभिः 'शन्तिवा' [५६]इत्यृचा 'उदायुषा' [ ३. ३१. १०.-११ ] इति द्वाभ्यां च प्रातरुत्तिष्ठते । 'उद्वयम्' [ ७. ५३. ७ ] इति गच्छति । 'उदीराणाः' [ २८ ] इत्यृचा प्राङ् वोदङ् वा बाह्यतो गच्छति । 'यावत्ते' [ ३३ ] इत्यृचा भुवमीक्षते । इत्याग्रहायणीकर्म । तदुक्तं कौशिकेन—'सत्यं बृहदित्याग्रहायण्याम् । पश्चादग्नेर्दर्भेषु खदायां सर्वहुतम् । द्वितीयं संपातवन्तमश्नाति । तृतीयस्यादितः सप्तभिर्भूमे मातरिति त्रिर्जुहोति । पश्चादग्नेर्दर्भेषु कशिप्वास्तीर्य विमृग्वरीमित्युपविशति । यास्ते शिवा इति संविशति । यच्छयान इति पर्यावर्तते । नवभिः शन्तिवेति दशम्योदायुषेत्युपोत्तिष्ठति । उद्वयमित्युत्क्रामति । उदीराणा इति त्रीणि पदानि प्राङ् वोदङ् वा बाह्येनोपनिष्क्रम्य यावत्त इति वीक्षते । [ २ ] तथा अनेनानुवाकेन उदपात्रं संपात्य पुरस्तादग्नेः सीरं युक्तं संप्रोक्षति । 'पुरस्तादग्नेः सीरं युक्तमुदपात्रेण संपातवतावासिञ्चति'

इति कौशिकोक्तेः । [ ३ ] तथा अनेनानुवाकेन कृषिकर्म भवति । 'आयोजनानामप्यय' इत्युक्तेः । तत्र कृषिनिष्पत्तिकर्मणि क्षेत्रं गत्वा युगलाङ्गलं बध्नाति । अनेनैव सूक्तेन दक्षिणमनड्वाहं युगे युनक्ति । ततः कर्ता अनेन सूक्तेन प्राचीनं कृषन् सूक्तसमाप्त्यनन्तरं हालिकाय प्रयच्छेत् । तेन तिसृषु सीतासु कृष्टासु उत्तरसीतान्तेऽग्निमुपसमाधायाऽनेन सूक्तेन पुरोडाशेनेन्द्रं स्थालीपाकेनाश्विनौ च यजन्नुत्तरस्यां सीतायां संपातानानयेत् । [ ४ ] तथा ग्रामपत्तनादिरक्षार्थमनेनानुवाकेन चतुरः पुरोडाशान् अश्मोत्तरान् कृत्वा ग्रामादिकोणेषु निखनति । [ ५ ] तथा ग्रामपत्तनादिरक्षार्थमनेनानुवाकेनैकैकस्य पुरोडाशस्य पाषाणमुपरिकृत्वा उभयान् संपातवतः कृत्वा ग्रामादिकोणेषु निखनति । सर्वत्र प्रतिद्रव्यं सूक्तावृत्तिः । [ ६ ] तथा अग्नेरायतनस्य असन्तापयुक्ते देशे शयानः एतमनुवाकं जपति । सर्वत्र कर्मणां विकल्पः । तदुक्तं कौशिकसूत्रे—'भौमस्य इतिकर्माणि । पुरोडाशानश्मोत्तरानन्तःस्रक्तिषु निदधाति । उभयान्त्संपातवतः । सभाभागधानेषु च । असन्तापे ज्योतिरायतनस्यैकतोन्यं शयानो भौमं जपति' इति [ कौ० ३८ ] । [ ७ ] तथा भूमिचलनेऽस्यानुवाकस्य होमे विनियोगः । 'अथ यत्रैतद् भूमिचलो भवति' इत्युपक्रम्योक्तं कौशिकेन—'सत्यं बृहदित्येतेनानुवाकेन जुहुयात् सा तत्र प्रायश्चित्तिः' इति [ कौ० ९८ ] । [ ८ ] तथा 'पार्थिवीं भूमिकामस्य' इति [ न० क० १७ ] विहितायां पार्थिव्यां महाशान्तौ अस्यानुवाकस्य विनियोगः । तदुक्तं नक्षत्रकल्पे—"सत्यं बृहदित्यनुवाकः पार्थिव्याम्" [ न० क० १८ ] इति ।

**मन्त्रविनियोगः**—[ १ ] पुष्टिकाम उन्नतं स्थलमारुह्य 'यावत्ते' [ ३३ ] इत्यृचा भुवमीक्षते 'यावत्त इति वीक्षते । उन्नताच्च' इत्युक्तेः [ २ ] तथा पुत्रधनादिसर्वफलप्राप्त्यर्थं 'यस्यां सदोहविर्धाने' [ ३८-४० ] इति तिसृभिराज्यं जुहोति । तथा चोक्तम्—'यस्यां सदोहविर्धाने इति जुहोति वरो म आगमिष्यतीति ।' [ ३ ] तथा व्रीहियवाद्यन्नकामः 'यस्या-

मन्नम्' [ ४२ ] इत्यृचा पृथिवीमुपतिष्ठते । 'यस्यामन्नमित्युपतिष्ठत' इति सूत्रात् । [ ४ ] तथा मणिहिरण्यादिकामः 'निधिं बिभ्रती' [ ४४-४५ ] इति द्वाभ्यां पृथिवीमुपतिष्ठते । 'निधिं बिभ्रतीति मणिहिरण्यकाम' इत्युक्तेः [ ५ ] तथा प्राप्यापि मणिं हिरण्यं वा आभ्यामेवोपतिष्ठते । 'एवं विद्वानि' ति सूत्रात् । [ ६ ] तथा पुष्टिकामः वृष्टिकाले 'यस्यां कृष्णम्' [ ५२ ] इत्यृचा नवोदकमभिमन्त्र्य आचमनं स्नानं च करोति । तथा च सूत्रे—'यस्यां कृष्णमिति वार्षकृतस्याचामति । शिरस्यानयते ।' इति । [ ७ ] तथा सोमयज्ञे दीक्षितनियमेषु मूत्रपुरीषशुद्ध्यर्थं लोष्ठादाने अस्य विनियोगः । तदुक्तं वैताने—'सत्यं बृहदिति लोष्ठमादाय' इति । इति सायणाचार्यनिर्दिष्टा विनियोगाः ।

मन्त्रव्याख्यानम्—

१

**सत्यं बृहदृतमुग्रं दीक्षा तपो ब्रह्म यज्ञः पृथिवीं धारयन्ति ।**
**सा नो भूतस्य भव्यस्य पत्न्युरुं लोकं पृथिवी नः कृणोतु ॥**

❀ ज्योत्स्ना ❀ [ अन्वयः ] सत्यम्, बृहत्, ऋतम्, उग्रम्, दीक्षा, तपः, ब्रह्म, यज्ञः, ( इति ) नः पृथिवीं धारयन्ति । सा भूतस्य भव्यस्य पत्नी पृथिवी नः उरुं लोकं कृणोतु ।

[ हिन्दी ] *पृथिवीका धारण*–वाणीका सत्य, गाम्भीर्य, मानसिक सत्य, शासन गुण, अधिकार और योग्यता के अनुरूप कर्तव्यनिष्ठा, सात्विक तप, वेद, और यज्ञ ये आठ धर्मशाखाएँ हमारी पृथ्वी को धारण करती हैं । यह भूत भविष्य के इतिहास की पालन करने वाली भूमि हमें विस्तीर्ण निवासस्थान प्रदान करे ॥१॥

❀ *पीयूषकणिकाव्याख्या* ❀

मन्त्रेऽस्मिन् पूर्वार्धे सत्यं बृहदित्यादीन्यष्टौ पृथिव्या धारकाणि । उत्तरार्धे

च पृथिव्या विशालत्वाशीश्च निरूप्यते । तत्र सत्यं वाचिकं यथार्थ-भाषणम् । बृहदिति महत्तापादको गुणो धृतिः, गाम्भीर्यम् । ऋतं मानसं यथार्थसङ्कल्पनम् । उग्रमिति शासकत्वापरपर्यायो गुणः क्षत्रम् । दीक्षा स्वाधिकारस्वकर्तव्यानुरूपः श्रद्धापूर्वको वाग्यमनादिनियमविशेष-स्वीकारः । तपः द्वन्द्वसहनपुरःसरं वाङ्-मनसयोर्युक्तरूपं नियोजनम् । ब्रह्म वेदः । यज्ञः हितकृदादानप्रदानात्मको व्यवहारः, इत्येतदष्टकं नः पृथिवीमस्मन्निवासभूतां भूमिं धारयन्ति उपप्लवादिविरहेणावष्टम्भयन्ति । सा सत्याद्यष्टकविधृता पूर्वोक्ता भूमिः, भूतस्य पूर्वं विहितस्य कार्यस्य, भव्यस्य भाविनश्च कार्यस्य पत्नी पालयित्री पृथिवी नः अस्माकं कृते उरुं विस्तीर्णं लोकं निवासस्थानं कृणोतु करोतु विदधातु । अत्र प्रथमे पादे द्वादशाक्षराणीन्येकाक्षराधिक्याद् भूरिक् त्रिष्टुप्छन्दः । 'भवियस्य' 'पत्नी + उरु' इति च व्यूहौ ॥ १ ॥

अवधेयम्—अस्मिन् हि पृथ्वीसूक्ते पीयूषमिवानन्दसन्दोहजनकं कृतमस्ति पीयूषभाष्यम् । भाष्यमिदमतिगभीरतत्त्वप्रकाशनपरं विदुषां चमत्कृतिकरमर्थ-जातं प्रकाशयत्सुविस्तृतं सार्धशतपृष्ठेभ्योऽन्यूनं विद्यते । तदिदं प्रकाशनाय विद्यमानमपि परीक्षार्थिनां विद्यार्थिनां न विशेषतः परीक्षोपकृतये भविष्यतीति कालान्तरे स्वातन्त्र्येण प्रकाशनमेव निश्चित्यात्र तदनुसारिणी सामान्यार्थ-बोधिनी पीयूषकणिकाख्या व्याख्या संप्रति प्रकाश्यते । पाठकानां भाष्य-विषयप्रज्ञप्तये भाष्यस्य प्रथममन्त्रसंबन्धि उपोद्घात-छन्दः-कल्प-व्याकरणा-दिविवरणपरमंशं विहाय कतिपयप्रारम्भिकश्लोकसहितं तदीयं किञ्चिद् विवे-चनमिहोपस्थाप्यते ।

❀ पीयूषभाष्यम् ❀

.............................................. ॥

वसुधेवेदं सूक्तं गभीरमर्थं दधाति नैकविधम् ।
लभतेऽन्वेषणशूरो विद्याव्यसनी प्रतीक्ष्यसेवी च ॥

वेदोऽलौकिकविधया वक्ति पदार्थांस्तथैव सूक्तेऽस्मिन् ।
एतदलौकिकमर्थं नहि लभते लोकनिरतो यः ॥
अज्ञोऽलौकिकविद्यापारदृशामिहाचार्यचरणानाम् ।
समवाप्य धूलिकणिकाकृपयाऽऽकलये किमप्यपूर्वं तत् ॥
तत्त्वं पीयूषनिभं गुणगरिमाकृष्टमानसा विबुधाः ।
गृह्णन्त्विह चेद्विकृतिर्नुः स्वाभाव्याज्जहीत दोषज्ञाः ॥

**विवेचनम्**—सर्वोऽपि हि जनः सुखाय प्रयतमानः स्वस्य समाजस्य राष्ट्रस्य वा स्वामित्वेनावस्थितां महतीं भूमिं द्रष्टुं कामयते प्रयतते च, परं पौरुषेण कथञ्चिदवाप्तापि सा अतिवृष्ट्य-नावृष्टि-भूचलन—वज्रपाता-ऽसीमनदी-जलविस्ताराद्याधिदैविकैः, परस्परवर्ग-राष्ट्रसंघर्षाद्यात्मकाधिभौतिकैः, अनैतिकता—चारित्र्यविरहाद्याध्यात्मिकैरुपप्लवैः न स्ववशे तिष्ठति, तिष्ठन्त्यपि च न सुखाय कल्पत इति किमस्याः स्वायत्तापादकं धारकं तत्त्वमिति विचारे 'धर्मो विश्वस्य जगतः प्रतिष्ठा' 'धारणाद्धर्म-इत्याहुः' 'धर्मो धारयते प्रजाः' 'धर्मो हैनं गुप्तो गोपायति' ( गो० पू० २।४ ) 'धर्मो रक्षति रक्षितः' ( मनु० ८।१५ ) इत्यादिश्रुतिस्मृतिवचनेभ्यः, 'पृथिवीं धर्मणा धृताम्' (१७ मं०) इति चात्रैव सूक्तेऽनुपदं वक्ष्यमाणत्वाच्च धर्मस्यैव धारकत्वं सिद्धं भवति । धर्मस्य च बहुशाखित्वं शास्त्रेषु प्रसिद्धम् । तदत्र पृथ्वीधारयितॄणां कासाञ्चिद्विशिष्टानां शाखानां परिगणनं क्रियते पृथ्वीतल-निवासिनां तत्र विशेषप्रवृत्तये सत्यमित्यादिना ।

**सत्यम् ऋतम्**—'सत्यं तथ्यमृतम्' इति त्रिकाण्ड्यां ( १।६।२२ ) ऋतसत्ययोः पर्यायत्वेऽपि 'ऋतं च सत्यञ्च' ( ऋ० १०।१९०।१ ) इत्यादौ द्वयोरपि सहप्रयोगदर्शनेनार्थभेदस्यावश्यं स्वीकार्यत्वात् वाचिक-मानसिकभेदोऽभ्युपगन्तव्यो भवति । एवं चोभाभ्यामपि पदाभ्यां 'सत्यं यथार्थं वाङ्मनसे । यथा दृष्टं यथानुमितं यथा श्रुतं तथा वाङ् मनश्चेति । परत्र स्वबोधसङ्क्रान्तये (या) वागुक्ता सा यदि न वञ्चिता भ्रान्ता प्रतिपत्तिवन्ध्या वा भवेदिति । एषा सर्वभूतोपकारार्थं प्रवृत्ता न भूतोपघाताय, यदि

चैवमप्यभिधीयमाना भूतोपघातपरैव स्यान्न सत्यं भवेत्, पापमेव भवेत्, तेन पुण्याभासेन पुण्यप्रतिरूपकेण कष्टतमं प्राप्नुयात् । तस्मात्परीक्ष्य सर्वभूतहितं ब्रूयात् ।' इति ( यो० द० २।३० ) व्यासोक्तिरनुगृह्यते ।

बृहत्—अस्ति बृहदति महतो नामधेयम् । अत्र च महत्तापादकस्य धृत्यात्मकस्य गाम्भीर्यगुणस्य वाचको बृहच्छब्दः । गाम्भीर्यं नामावगतस्य पदार्थस्य मनसिकरणपूर्वकं यथासमयं यथानुरूपञ्च तस्य प्रकाशकत्वम् । 'न त्वा गभीरः पुरुहूत सिन्धुः' (ऋ० ३।३२।१६) 'समुद्र इव गाम्भीर्ये' (वा० रा० १।१७) इत्यादिषु आत्मसात्करण-मर्यादानतिक्रमण-परार्थात्मदातृत्वरूपार्थसादृश्येन गाम्भीर्यस्य समुद्रेणोपमितत्वात् । नन्वत्र बृहदिति शब्दे मनसिकरणं सामयिकप्रकाशनमिति कुतोऽवगन्तुं शक्यत इति चेदुच्यते—'प्रजापतिरकामयत बहु स्यां प्रजायेयेति । स तूष्णीं मनसा ध्यायत्तस्य यन्मनस्यासीत्तद् बृहत् समभवत् ।' इत्युपक्रम्य 'ततो बृहदनु प्राजायत बृहन्मयी इदं स ज्योगन्तरभूदिति तद् बृहतो बृहत्त्वम्' इति ( ७।६ ) ताण्ड्यब्राह्मणतो बृहति मनसिकरण-सामयिकप्रकाशनयोः स्पष्टमवगतेः, 'प्रज्यैष्ठ्यमाप्नोति य एवं वेदे' ति फलार्थवादे ज्यैष्ठ्यत्वस्य फलस्य श्रवणाच्च ।

सत्य-ऋतशब्दयोर्मध्ये बृहच्छब्दस्य पाठस्तु वाङ्मनससत्ये प्रियत्वपरिज्ञापनार्थम् । वाङ्मनसयोर्यथार्थसत्यमप्यविचार्य झटित्युच्यमानं परस्य क्लेशावहं कदाचिद् भवतीति तदर्थं गाम्भीर्यमावश्यकम् । गाम्भीर्येण विचार्य चोच्यमानं प्रियं हितञ्च भवतीति विशेषः सर्वजनप्रसिद्धः । तदेवात्र सत्यर्तयोरन्तराधीयमानं काकाक्षिगोलकन्यायेनोभयत्र प्रियत्वयुक्तमर्थं द्योतयति । एवं च—

'सत्यं ब्रूयात् प्रियं ब्रूयात् न ब्रूयात् सत्यमप्रियम् ।
प्रियञ्च नानृतं ब्रूयादेष धर्मः सनातनः ॥' ( मनु० ४।१३८ )

इति स्मृतिरप्यनुगृह्यते ।

उग्रम्—अत्रातिशयितभयङ्करार्थप्रकाशकेनोग्रशब्देन तदधिष्ठानभूतस्य

क्षत्रियस्य क्षत्रगुणो निर्दिश्यते। क्षत्रस्योग्र*रूपत्वात्, पालयितृत्वात्, अन्योन्यस्य स्वस्वधर्मानतिचरणात्मकसुव्यवस्थितिकारितया धारकत्वाभ्युपगमात्, 'उरुं गभीरं जनुषाभ्युग्रम्' ( ऋ० ३।४६।४ ) इति जन्मत एवोग्रत्वस्येन्द्रे वर्तमानत्वात्, इन्द्रस्य च 'ब्रह्म वा इदमग्र आसीदेकमेव। तदेकं सन्न व्यभवत् तच्छ्रेयोरूपमत्यसृजत क्षत्रम्, यान्येतानि देवत्रा क्षत्राणीन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशान इति। तस्मात् क्षत्रात्परं नास्ति।' इति ( श० ब्रा १४।४।२।२३) परिपालनादिविभूतिवत्कर्मणो उत्पत्तेः स्पष्टमुक्तत्वाद् धारणसमर्थस्य क्षत्रगुणस्योग्रपदेन ग्रहणं समुचितं सिद्धयति।

दीक्षा—यद्यपि साधारण्येन स्वीकृतनियमविशेष एव दीक्षाशब्दो लोके प्रसिद्धयति, परं वैदिकशब्दार्थतत्त्वजिज्ञासया पर्यालोच्यमाने दीक्षाशब्दे अधिकारः, शास्त्रानुवर्तित्वम्, नियतकालिकत्वं, नियमस्वीकारः, तत्पालनं चेति पञ्चकं तत्र विस्पष्टमुपलभ्यते। 'दीक्षाप्रभृती' ति (का० श्रौ० ७।१।२१) कात्यायनसूत्रे "दीक्षाशब्दो ह्यलौकिकस्तस्य किं वाच्यमित्यत उक्तम् पञ्चमीं सप्तमीं वा प्रसुत इति। कृष्णाजिनादिभिर्दीक्षितः सन् यावन्त्यहानि प्राक् प्रायणीयायाः दीक्षितधर्मैरास्ते तानि दीक्षाशब्दवाच्यानि। तेषामियं संख्या एका दीक्षा तिस्र इत्येवमादि। तथा चाहीनेषु मासापवर्गतामभिधाय 'दीक्षाः सुत्योपसच्छ्रेषेण' इत्युक्तम्। तथा 'दीक्षाणामुत्तमेऽहनि वेद्यग्निमानमि'ति। अहःशब्देन रात्रिरप्युपलक्ष्यते। तेनाहोरात्रपरिच्छिन्ना दीक्षेति ज्ञापयति" इति कर्कभाष्यतस्तथावगमात्। तथा हि दीक्षाशब्दस्यालौकिकत्वम्, अलौकिके च शास्त्रैकमात्रसमधिगम्यताया अवश्यमङ्गीकारः। शास्त्रस्य चाधिकारमुपजीव्य प्रवर्तमानत्वादधिकारादिपञ्चकस्य स्पष्टमेव तत्र सन्निवेशः। यच्च साम्प्रतं दीक्षान्तभाषणादिषु विद्याशालाध्ययनार्थको दीक्षाशब्दप्रयोगः सोऽपि शास्त्रानुवर्तित्वं परित्यज्याधिका-

---

* 'उग्रत्वात् क्षत्रस्य' शां० भा० ( बृ० आ० १।४।१४ )

रादिचतुष्टयमनतिशेत इति तत्रौपचारिकत्वम्। शास्त्रानुवर्तित्वविरहादेव च तत्र निःश्रेयससाधनत्वं नियतेष्टसाधनत्वं च न भवतीति। अत्र पृथ्वीधारयितृषु दीक्षाशब्दनिर्देशः सर्वस्यापि स्व-स्वाधिकारयोग्यतानुरूपकार्यप्रवृत्तिं अनधिकारचेष्टापरित्यागं च द्योतयति, एतस्यापि सुव्यवस्थितिकारित्वात्, सुव्यवस्थायाश्च धारणसाधनीभूतत्वात्। यदि हि सर्वेऽपि स्वाधिकारानुरूपमेव कुर्युरिच्छेयुश्च, तदा न कथमपि कलहसम्भवः, न च कस्यापि समवाप्तभूमिविप्लवः। एतादृश आसीत् कदाचित् समयो यस्य हि निरूपणं—

'धर्मेणैव प्रजाः सर्वा रक्षन्ति स्म परस्परम्।
न राज्यं न च राजासीन्न दण्ड्यो न च दाण्डिकः॥'

इत्यादिवचोभिः स्मर्यत इति।

तपः—तत्र तावत् शारीर—वाचिक—मानसभेदेन तपस्त्रिविधम्। पुनश्च तत्त्रिविधमपि सात्त्विक—राजस—तामसभेदेन त्रिधा भिद्यत इति नवविधम्। तथा च श्रीमद्भगवद्गीतायाम् ( १७।१४-१९ )—

देव—द्विज—गुरु—प्राज्ञपूजनं शौचमार्जवम्।
ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते॥
अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत्।
स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते॥
मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः।
भावसंशुद्धिरित्येतत्तपो मानसमुच्यते॥
श्रद्धया परया तप्तं तपस्तत् त्रिविधं नरैः।
अफलाकाङ्क्षिभिर्युक्तैः सात्त्विकं परिचक्षते॥
सत्कार—मान—पूजार्थं तपो दम्भेन चैव यत्।
क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम्॥
मूढग्राहेणात्मनो यत् पीडया क्रियते तपः।
परस्योत्सादनार्थं वा तत्तामसमुदाहृतम्॥'

इति। तदत्र नवविधेष्वपि 'कर्मणः सुकृतस्याहुः सात्त्विकं निर्मलं फलम्।

रजसस्तु फलं दुःखमज्ञानं तमसः फलम् ॥' इति (१४।१६) भगवदुक्तेः,

'वेदास्त्यागश्च यज्ञाश्च नियमाश्च तपांसि च ।
न विप्रदुष्टभावस्य सिद्धिं गच्छन्ति कर्हिचित् ॥'

इति (२।९७) मानवीयात्, अनर्थकारिण्याः शास्त्रोक्तानुष्ठितेरपि च 'चोदनालक्षणोऽर्थो धर्मः' (जै० १।१।१) इत्यत्रार्थविशेषणबलात् धर्मा-शबहिर्भूतत्वाद्राजसतामसयोस्ते सप्रभेदे परित्यज्य सात्त्विकस्यैव त्रिविध-तपसो धारयितृत्वं सिद्ध्यति । सात्त्विकस्यापि तपसः शास्त्रविहितत्वं तु सर्वथाभ्यर्हितमेव । 'तपः द्वन्द्वसहनम् । द्वन्द्वश्च जिघत्सा-पिपासे, शीतोष्णे, स्थानासने, काष्ठमौनाकारमौने च । व्रतानि चैषां यथायोगं कृच्छ्रचान्द्रायणसान्तपनादीनि ।' इति (यो० द० २।३२) वैयासिकभाष्ये, 'द्वन्द्वान्याह जिघत्सेति । जिघत्सा बुभुक्षा । यद्यपि शीतोष्णादिवत् परस्परविरुद्धत्वं बुभुक्षापिपासयोर्नास्ति, तथापि मिथुनवदेव पारिभाषिकद्वन्द्वता । स्थानमूर्ध्वावस्थानम्, आसनं चोपवे-शनम् । काष्ठमौनमिङ्गितेनापि स्वाभिप्रायाप्रकाशनम् । आकारमौनं त्ववच-नमात्रम् । एतानि शास्त्रोक्तव्रतेनैव सोढव्यानि न तु वृथाशयेनेत्याह—व्रतानि चैषामिति ।' तत्र वार्तिके व्याख्यानात्,

'यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः ।
न स सिद्धिमवाप्नोति न सुखं न पराङ्गतिम् ॥' (१६।२२),
'अशास्त्रविहितं घोरं तप्यन्ते ये तपो जनाः ।
दम्भाहङ्कारसंयुक्ताः कामरागबलान्विताः ॥
कर्षयन्तः शरीरस्थं भूतग्राममचेतसः ।
मां चैवान्तःशरीरस्थं तान् विद्ध्यासुरनिश्चयान् ।'

इति (१७।५-६) भगवदुक्तेश्चेति ।

ब्रह्म—वेदः । 'वेदो ब्रह्म' इति (४।२५।३) जैमिनीयोपनिषद्ब्राह्मणे, सामान्यत एकरूपेण, 'स (प्रजापतिः) श्रान्तस्तेपानो ब्रह्मैव प्रथम-मसृजत, त्रयीमेव विद्याम् ।' (श० ६।१।१।८). 'ततो ब्रह्मैव प्रथममसृ-

ज्यत, अय्येव विद्या तस्मादाहुर्ब्रह्मास्य सर्वस्य प्रथमजम्' (श० ६।१।१।१०) इति वाजसनेयिश्रुतौ, लोके च 'ब्रह्मचारी'प्रभृतिपदनिर्वचने अय्याः ब्रह्मत्वेन सुस्पष्टमवगमात्। अत्र 'साक्षात्कृतधर्माण ऋषयो बभूवुस्तेऽवरेभ्योऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान् संप्रादुः। उपदेशाय ग्लायन्तोऽवरे बिल्मग्रहणायेमं ग्रन्थं समाम्नासिषुर्वेदं वेदाङ्गानि च' ( निरु० १।१९ ) इति यास्केन धर्मप्रमितौ वेदाङ्गानामपि निर्देशात्,

'पुराण - न्याय - मीमांसा–धर्मशास्त्राङ्गमिश्रिताः।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥'

इति ( या० स्मृ० १।३ ) चतुर्दशविद्यानामपि धर्मस्य ज्ञापकहेतुरूपतया स्वीकारादत्र च विशिष्टानां धर्मशाखानामेव धारयितृत्वश्रवणाद् ब्रह्मशब्दो वेदं तन्मूलिकाश्च सर्वा अपि विद्याः सङ्गृह्णातीति।

यज्ञः—स हि स्वाहाकार-वषटकार-नमस्कारादिप्रदानात्मको यज्ञो लोकप्रसिद्धः। एतस्यैव च ( १७।११-१३ ) गीतायाम्—

'अफलाकाङ्क्षिभिर्यज्ञो विधिदृष्टो य इज्यते।
यष्टव्यमेवेति मनः समाधाय स सात्त्विकः ॥
अभिसन्धाय तु फलं दम्भार्थमपि चैव यत्।
इज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसम् ॥
विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम्।
श्रद्धाविरहितं यज्ञं तामसं परिचक्षते ॥'

इति त्रैविध्यमुक्तम्। अत्र तु वेदानामिवैकत्वेन इष्टसाधनानां आदानप्रदानलक्षणानां त्रयोदशविधानामवन्धनानां समेषामपि यज्ञानां सङ्ग्रहः। तानि च द्रव्य-दैव-ब्रह्मार्पण-ब्रह्माग्नि-संयमाग्नि–इन्द्रियाग्नि–योगाग्नि–तपोयोग–स्वाध्याय–ज्ञान–प्राणायाम–प्राणाख्यानि। तत्र द्रव्ययज्ञः पाकयज्ञ–हविर्यज्ञ–सोमयज्ञाद्यभिधाभिः श्रौत–स्मार्त–पौराण–तान्त्रिकभेदेन च बहुधा विभिद्यते। स एष सर्वोऽपि यज्ञो 'सर्वेषां वा एष भूतानां, सर्वेषां देवानामात्मा यद्यज्ञः।' ( श० १४।३।२।१ ) इति श्रुतेरात्मस्वरूपो धार-

यिता। मैत्रायणीयशाखायां तु 'यज्ञाः' इति बहुत्वेनाधीत्य स्पष्टमेव सवसङ्ग्रहः कृतोऽस्ति। तपस इवात्रापि सात्विकत्वं त्वभिमतमेव धारणसामर्थ्यात्तस्येति।

**पृथिवीं धारयन्ति**—धारणं हि द्वेधा संभवति। आधाररूपेणैकम्, अन्तरङ्गस्थितिनियामकतया चापरम्। तत्र धर्मस्य तदीयशाखानां चान्तरङ्गस्थितिनियामकतया धारकत्वम्। अन्तरङ्गा हि धारणस्थितिः सत्तात्मिका, वृद्ध्युदर्कवत्परिणामरूपा, समृद्धिरूपा चेति त्रिधा भवितुमर्हति। यासां निरूपणमग्रे करिष्यते। तत्रैषां सत्याद्यष्टकानां त्रिविधाया अपि धृतेः साधनत्वम्। अत्रोक्तानामन्यत्रापि पृथ्वीधारयितृत्वं प्रसिद्धम्। तथा हि—

'गोभिर्विप्रैश्च वेदैश्च सतीभिः सत्यवादिभिः।
अलुब्धैर्दानशीलैश्च सप्तभिर्धार्यते मही॥' इति।

गोविप्रादीनां मन्त्रेऽनुक्तानां यथायथं यज्ञ-ब्रह्मादिरूपेण तत्साधनत्वेन वात्र निर्देश उन्नेयः। श्रुतिरपि—'सत्येनोत्तभिता भूमिः' (ऋ० १०।८५।१) इत्यादिका भवति। अत्र सायणभाष्येऽपि—'सत्येन ब्रह्मणानन्तात्मना। ब्रह्मा खलु देवानां मध्ये सत्यभूतः। तेनाधःस्थितेन भूमिः उत्तभिता उपरि स्तम्भिता। यथाधो न पतेत्तथा कृता। यद्वा सत्येन अनृतप्रतियोगिना धर्मेण भूमिरुत्तम्भितोद्धृता फलिता भवतीत्यर्थः। असति सत्ये भूम्यां सस्यादयो न फलन्ति' इति। श्रीमद्भागवतेऽपि (४।१८।६-७) व्यतिरेकमुखभूतार्थवादेन यथा—

'पुरा सृष्टा ह्योषधयो ब्रह्मणा या विशाम्पते।
भुज्यमाना मया दृष्टा असद्भिरधृतव्रतैः॥
अपालितानादृता च भवद्भिर्लोकपालकैः।
चोरीभूतेऽथ लोकेऽहं यज्ञार्थेऽग्रसमोषधीः॥' इति।

**सा नो भूतस्य भव्यस्य**—भव्यशब्दो भविष्यत्यर्थे पुराणेष्वपि दृश्यते—'सर्वं पुरुष एवेदं भूतं भव्यं भवच्च यत्' (भा० २।६।१५) इत्यादौ।

पत्नी—'पत्युर्नो यज्ञसंयोगे' इति पाणिनीयानुशासने सहधर्मिण्यां पतिशब्दात् पत्नीशब्दो निष्पाद्यते। अत्र च यज्ञसंयोगमर्थं परिहाय पतिशब्दस्यैव स्वार्थे स्त्रियां नुगागमप्रयोगश्छान्दसः।

भूतस्य भव्यस्येति विशेषणपदानां साकाङ्क्षतापूरणाय सत्य-बृहदादीन्यष्टौ पदानि विभक्त्या विपरिणमय्य योज्यानि। एवं च भूतस्य भाविनश्च सत्यस्य बृहतः ऋतस्य उग्रस्य दीक्षायास्तपसो ब्रह्मणो यज्ञस्य च पालयित्रीयं पृथ्वीति लभ्यते। सत्यादीनां चानुष्ठेयपदार्थत्वादनुष्ठातृसापेक्ष्यात् क्रियाक्रियावतोरभेदेन सत्यादिधर्मपरायणानां पालयित्रीति बोध्यते। भूतानां हि सत्यादिधर्मनिष्ठानां हरिश्चन्द्रादीनां यशःकायस्य पालनमैतिहासिककृतिसंरक्षणेन सर्वदोपलभ्यमानत्वादिति।

उरुं लोकं पृथिवी नः कृणोतु—ननु पृथिव्याः सकाशात्किमिति विशालस्थानप्रार्थनं क्रियत इति चेदुच्यते 'असुराणां वा इयं ( पृथिवी ) अग्र आसीत्' ( तै० ब्रा० ३।२।६।६ ) इत्यसुराणां पूर्वं स्वस्वामिसम्बन्धात् 'ये रूपाणि प्रतिमुञ्चमाना असुराः सन्तः स्वधया चरन्ति। परापुरो निपुरो ये भरन्त्यग्निष्टाँल्लोकात्प्रणुदात्यस्मादि' ( यजु० २।३० ) ति मन्त्रेऽसुराणां स्थूलसूक्ष्मादिनानारूपमवलम्ब्येतस्ततो भ्रमतामवगमात्, 'अयं वै लोकः सुक्षितिः। अस्मिन् हि लोके सर्वाणि भूतानि क्षियन्ति' ( श० ब्रा० १४।१।२।२४ ) इति श्रुतेः कदाचित्तानेवेयं न विशेषतोऽङ्गीकुर्यादित्यर्थमाशीः काम्यते। उरुत्वप्रार्थनया च तेषामपि सर्वथापसारणं न काम्यत इति नाशिषो भूतोपघातजनकत्वमिति॥

**अथात्र वैज्ञानिकार्थमधिजिगमिषूणां पथप्रदर्शनाय व्याख्यान्तरम्-**

इयं हि पृथिवी दृश्यते सर्वैरपि प्राणिभिः। सैषा केन धृता सती तिष्ठतीति समुदेति प्रथमं जिज्ञासा। जिज्ञासामिमां बहुधा समादधति शास्त्रविदः। आधुनिकास्तु सन्तुलितगुरुत्वेनेयं कस्यामपि मेढ्यां तिष्ठतीति समाचक्षते। तदेतस्याः समाधानमस्मिन् मन्त्रेऽपि साधु प्रतिपाद्यते सत्यं बृहदित्यादि।

अत्रायं मन्त्रार्थः—पृथिव्या धारणाय चत्वारः पादा उच्यन्ते। तत्र सत्यम् सकेन्द्रकम् बृहत् सूर्यः इत्येकः पादः। ऋतम् अकेन्द्रकं विप्रकीर्णस्वभावं उग्रं जलमिति द्वितीयः पादः। दीक्षा प्राणव्यापारायोन्मुखकारिणी अधिकारापादिका क्रिया तत्पूर्वकं तपः प्राणव्यापारः इति तृतीयः पादः। ब्रह्म वेदस्तदुपदिष्टो यज्ञ इति चतुर्थः पादः एते पृथिवीमिमां धारयन्ति। उत्तरार्धे चतुर्भिः पादैर्विधृताया भूमेः कालक्रमेण संपन्नस्य सम्पद्यमानस्य च विशेषवृत्तस्य सूचयितृत्वं नातितिरोहितमिति।

अथ वैज्ञानिकार्थावगत्यै पारिभाषिकपदज्ञानमावश्यकमिति सत्यऋतशब्दयोः स्वरूपज्ञानार्थं किञ्चिदुच्यते—ऋत-सत्यभेदेन द्विधा हि लोके पदार्था वर्तन्ते। ये पदार्था विशकलिता एव तिष्ठन्ति, न केन्द्रं परिकल्पयन्ति स्वभावतः, ते ऋतशब्देन व्यपदिश्यन्ते जल-वायुप्रभृतयः। भगवता निरुक्तकृता यास्केन 'प्रत्यृतं भवती' ति निब्रुवता 'तद्धि देशं देशं प्रत्यृतं गतमित्यर्थः' इति दुर्गाचार्येण चैतद् व्याचक्षाणेन इतस्ततो विप्रकीर्णे अकेन्द्रके पदार्थजाते ऋतशब्दप्रवृत्तिरनुगृह्यते। सत्यशब्देन च ये केन्द्रमाश्रित्य तिष्ठन्ति संहता इव, यथा प्रस्तर-तेजः प्रभृतयस्त उच्यन्ते। अत्रेदं चिन्त्यते—ननु शब्दयोरनयोर्ऋतसत्ययोः पर्यायत्वेन प्रसिद्धिरित्यर्थान्तरकल्पनमन्याय्यमिति चेत् 'ऋतं च सत्यं चाभीद्धात्' ( ऋ० १०।१९०।१) सत्यस्य सत्यमृतसत्यनेत्रं' ( श्रीभा० १०।२।२६ ) इत्यादिश्रुतिस्मृतिषु ऋतसत्ययोः सहप्रयोगदर्शनात्, समानाभिधानयोः सहप्रयोगान्यथानुपपत्त्यार्थान्तरानुसन्धानं न्याय्यमेव। अत एव 'ऋतं मानसं यथार्थसङ्कल्पनं सत्यं वाचिकं यथार्थभाषणम्' 'ऋतं च सूनृता वाणी सत्य च समदर्शनम्' इत्यर्थान्तराणि यत्र तत्र यथायथमुपलभ्यन्ते। अत्र तु वैज्ञानिके पृथ्वीस्वरूपनिर्णये सकेन्द्रकाकेन्द्रकव्याख्यानमेव साधीयः।

बृहत् शब्देनाऽत्र सूर्योऽभिधीयते 'आदित्यो बृहत्' (ऐ०ब्रा० ५।२०) इत्युक्तेः। सकेन्द्रकं हि सूर्यमण्डलं पृथ्वीमिमां स्वरश्मिभिराकर्षद्धारयतीति 'सविता यन्त्रैः पृथिवीमरम्णात्' ( ऋ० १०.१४९ )

'दाधर्थं पृथिवीमभितो मयूखैः' ( शु० य० ५।१६ )

इत्यादिश्रुतिभ्यः स्पष्टमवगम्यत, इति सूर्यस्य पृथिव्या धारकत्वं स्पष्टम्। उग्रशब्देन च आपोऽभिधीयन्ते 'वज्रो हि वा आपः, तस्माद्येनैता यन्ति निम्नं कुर्वन्ति, यत्रोपतिष्ठन्ते निर्दहन्ति ।' ( श०ब्रा० १।१।१।१७ ) इत्यपां निम्नकरण-निर्दहनात्मकस्योग्रकर्मणः श्रुतत्वात्प्रत्यक्षदृश्यत्वात् 'यदुग्रो देव ओषधयो वनस्पतयस्तेने' त्योषधिवनस्पतीनामीशित्वश्रवणाच्च। एवं च ऋतमुग्रमिति केन्द्रविरहिता विशकलिता आपः। अपां चास्याधारत्वेन धारकत्वम्। तथा च श्रुतिः 'पृथिव्यप्सु ( प्रतिष्ठिता )' ( ऐ० ब्रा० ३।६; गो० ब्रा० उ० ३।२ ) 'पृथिव्यप्सु श्रिता। अग्नेः प्रतिष्ठा' ( तै० ब्रा० ३ ११।१।६ ) इति।

तपः—वैज्ञानिकप्रक्रियायां तपःशब्दः प्राणव्यापारवाची। प्राणव्यापारेण च सर्वं धार्यत एव, बलविधारणयोः प्राणशक्तित्वात्। तपसश्चान्तरङ्गस्थितिनियामकतया धारकत्वम्। 'तपोऽसि लोके श्रितम्' ( तै० ब्रा० ३।११।१।२ ) इति तैत्तिरीयश्रुतौ 'तपो मे हृदयं साक्षादात्माहं तपसोऽनघ। सृजामि तपसैवेदं ग्रसामि तपसा पुनः। बिभर्मि तपसा विश्वं वीर्यं मे दुश्चरं तपः ॥' इति (भा० २।६।२२—२३) पुराणेषु च तपोमाहात्म्यदर्शनात्।

यज्ञः—आदानप्रदानात्मको हि यज्ञः। यावद्धि सर्वेभ्योऽपि पदार्थेभ्यः प्रतिक्षणमादानप्रदानात्मको यज्ञः सुचारुरूपेण संभवति तावदेव कस्यापि वस्तुनः स्थितिः सुदृढा भवति। यदा च यज्ञे शैथिल्यं प्रभवति तदैव वास्तविकी स्थितिरपि शिथिलायते, असंभवति च यज्ञे झटित्येव विनश्यतीति। सोऽयं प्रच्छन्नो यज्ञः सर्वस्मिन्नपि सर्वदास्ति, परं न स्थूलदृग्भिरवलोकयितुं शक्यते। अपि तु जायते अस्ति विपरिणमते वर्द्धते अपक्षीयते विनश्यतीति षड्भावविकाराणां वैज्ञानिकदृशा पर्यालोचने स्वत एव प्रसिद्ध्यति। यज्ञस्य च बाह्यस्थितिनियामकतया धारकत्वं संभवति। अत्र यज्ञिया विशेषोपपत्तिस्तु वैदिकविज्ञानग्रन्थान्तरेभ्योऽवगन्तव्येति दिक् ॥ १ ॥

२

असम्बाधं बध्यतो मानवानां यस्या उद्वतः प्रवतः समं बहु ।
नानावीर्या ओषधीर्या बिभर्ति पृथिवी नः प्रथतां राध्यतां नः ॥

* ज्योत्स्ना * [ अन्वयः ] उद्वतः प्रवतः यस्याः बध्यतः मानवानाम् कृते) असम्बाधं समं बहु 'लोकं धारयन्ति' । या नानावीर्याः ओषधीः बिभर्ति । ( सा ) पृथिवी नः प्रथताम् । ( तथा ) नः राध्यताम् ।

[ हिन्दी ] देवता और महर्षियों की कृपा—देवता तथा सनकादि मनुष्य महर्षियों ने जिस पृथिवी के ऊपर सांसारिक कर्म बन्धन से बँधे हुए मनुष्यों के लिए बाधा रहित साधारण एवं अनेक प्रकार के पुण्य स्थान स्थापित किये हैं । तथा जो अनेकविध रोगनाशक तथा बलवर्धक औषधियों को धारण करती है, वह पृथिवी हमारे लिए विशाल बने, तथा हमारी अभिलाषाओं को पूर्ण करे ।

* पीयूष० * अत्र पूर्वार्धे साकाङ्क्षतया सामर्थ्याच्च 'लोकं धारयन्ति' इति पूर्वमन्त्रादनुषज्यते । ततश्च उद्वतः[1] देवताः, प्रवतः[1] प्रकृष्टगतयो महर्षयः सनकाद्या मनुष्याः यस्याः पूर्वोक्तायाः पृथिव्याः प्रदेशे, बध्यतः बध्यतां सांसारिककर्मपाशेनाविद्यया जन्ममृत्युजराबन्धने बद्धानां, मानवानां मनुष्याणां कृते असंबाधं बाधारहितं समं समानं साधारणं बहु नानाप्रकारकं लोकं स्थानं धारयन्ति पोषयन्ति स्थापयन्तीत्यर्थः । अयं भावः- सांसारिककर्मबन्धनेनाविद्यया संसृतिपर्यावर्ते भ्रममाणानां मानवानामुद्वारायास्याः पृथिव्याः प्रदेशे करुणापरा देवा ऋषयश्च स्वसान्निध्येन स्वकृपावीक्षणाप्यायनेन वा बाधाविरहितान् सरलान्—साधारण्येन सर्वैरपि प्राप्यानीदृशान् प्रदेशान् धारयन्ति येषां दर्शन-श्रवण-स्पर्शना-वगाहन-कीर्तन-स्था-

१ द्र० निरु० ( १०।२० ) दुर्गाचार्यभाष्यम् ।

नासनादिभिरेव पापक्षयपूर्वकं कर्मबन्धनिरासो भवति। तथा या पृथिवी नानावीर्याः अनेकविधप्रभावसम्पन्नाः ओषधीः आमयनाशिनीः हरीतक्यादयः सत्वविवर्धिनीर्गोधूमधान्यादिकाश्चैता उभयविधा ओषधीः बिभर्ति धारयति। सा पृथिवी नोऽस्मभ्यं प्रथतां विस्तृता भवतु। ओषधयो यस्यामुत्पद्यन्ते सैषास्माकं देशे उर्वरा भूमिर्बहूर्भवत्वित्यर्थः। तथा सैषा पृथिवी नोऽस्माकं राध्यतां संसाधयतु अभीप्सितमिति शेषः। द्वितीयपादस्य द्वादशाक्षरत्वाद् भूरिक् त्रिष्टुप्छन्दः ॥ २ ॥

३

**यस्यां समुद्र उत सिन्धुरापो यस्यामन्नं कृष्टयः संबभूवुः।**
**यस्यामिदं जिन्वति प्राणदेजत् सा नो भूमिः पूर्वपेये दधातु ॥**

❀ ज्योत्स्ना ❀ [ अन्वयः ] यस्यां समुद्रः, उत सिन्धुः, 'उत' आपः 'संबभूवुः'। यस्यां कृष्टयः अन्नं संबभूवुः। यस्याम् इदं प्राणत् एजत् जिन्वति। सा भूमिः नः पूर्वपेये दधातु।

[ हिन्दी ] *सर्वप्रथम अन्न उपजने की प्रार्थना*—जिस पृथिवी पर वर्षा वाले प्रदेश, नदी और कुएँ तालाव आदि हैं। और जिसपर मनुष्य लोग अन्न पैदा करते हैं। तथा जिस पर यह समस्त प्राण या कम्पन से युक्त स्थावर जङ्गम संसार प्रसन्न होता है, वह भूमि हमें सर्वप्रथम अन्न रस के उपभोग में स्थापित करे।

❀ पीयूष० ❀ 'नानावीर्या ओषधीर्या बिभर्ती' त्युक्तम्। तत्रौषधीषु प्राधान्यतया जीवनोपजीव्यत्वात् फलपाकावसानानि गोधूमधान्यादीनि भोज्यान्यन्नानि स्मृतिपथमारोहन्ति। तदेतेषामुत्पत्तिरुच्यते यस्यामिति। यस्यां पृथिव्यां समुद्रः अब्धिः, अन्तरिक्षं वा तत्र भवा या वृष्टेरापः उत तथा सिन्धुः नदी, तथा आपः आधाराधेययोस्तादात्म्यनिर्देशात् जलाधिकरणानि वापीकूपतडागादिकानि 'संबभूवुः' भवन्ति सन्ति।

'छन्दसि लुङ्लङ्लिटः' इत्युक्तेः। तत्प्रभावेण च यस्यां भूम्यां कृष्टयः मनुष्याः अन्नं गोधूमधान्यादिकं संबभूवुः संभावयन्ति उत्पादयन्ति, अन्तर्भावितण्यर्थस्य भवतेर्लकारव्यत्ययः। यस्यां च इदं स्थूलदृशा दृश्यमदृश्यं च सर्वं प्राणत् जीवितं, एजत् कम्पमानं च जगत् जिन्वति प्रीणाति सा भूमिः नोऽस्मान् पूर्वपेये पूर्वं यथा उत्पन्नस्यान्नस्य रसमुपलभेमहि तथा दधातु धारयतु पोषयतु। अत्र समुद्र इति देवमातृकदेशः। सिन्धुरिति नदीमातृकदेशः। आप इति कृष्टपच्यदेश उक्तः। त्रिष्टुप्छन्दः। अक्षरानाधिक्याच्च न भूरिक्त्वम्॥ ३॥

४

**यस्याश्चतस्रः प्रदिशः पृथिव्या यस्यामन्नं कृष्टयः संबभूवुः।**
**या बिभर्ति बहुधा प्राणदेजत् सा नो भूमिर्गोष्वप्यन्ने दधातु॥**

❀ ज्योत्स्ना ❀ [ अन्वयः ] यस्याः पृथिव्याः चतस्रः प्रदिशः (सन्ति), यस्यां कृष्टयः अन्नं संबभूवुः। या प्राणत् एजत् बहुधा बिभर्ति, सा भूमिः नः गोषु अन्ने अपि दधातु।

[ हिन्दी ] *पशु समृद्धिकी प्रार्थना*—जिस पृथिवी के पूर्व-पश्चिम-दक्षिण-उत्तर ये चार दिशाएँ हैं। तथा जिन दिशाओं में मनुष्य अन्न पैदा करते हैं। और जो भूमि स्थावर जङ्गम सब का अनेक प्रकार से पोषण करती है। वह भूमि हमें गौ और अन्न (की समृद्धि) में स्थापित करे।

❀ पीयूष० ❀ यस्याः पृथिव्याः चतस्रः चतुः संख्याकाः प्रदिशः प्रकृष्टाः पूर्व-दक्षिण-पश्चिमो-त्तरात्मकाः दिशः सन्ति। यस्यामिति दिङ्निर्देशकं बहुत्वेन विपरिणेतव्यम्। ततश्च यस्यां यासु दिक्षु कृष्टयः मनुष्याः अन्नं गोधूमधान्यादिकं संबभूवुः संभावयन्ति। या च प्राणत् प्राणन्तं एजत् स्पन्दमानं च जीवजातं बहुधा बहुभिर्विधाभिः कन्दमूलफलसस्यादि-

भिर्जीवनोपायैः बिभर्ति पोषयति। सा भूमिः नः अस्मान् गोषु गवोपलक्षणया सर्वेष पशुषु अन्ने अदनीये पदार्थजाते अपि च दधातु धारयतु स्थापयतु। पशुभिरन्नैश्च समृद्धा वयं स्यामेति भावः। जगतीच्छन्द इति सर्वानुक्रमण्याम्। लक्षणतस्त्रिष्टुप्छन्दः। त्र्यवसाना षट्पदा जगतीति लेखनं तु भ्रममूलकम्॥ ४॥

५

यस्यां पूर्वे पूर्वजना वि चक्रिरे यस्यां देवा असुरानभ्यवर्तयन्।
गवामश्वानां वयसश्च विष्ठा भगं वर्चः पृथिवी नो दधातु॥

* ज्योत्स्ना * [ अन्वयः ] यस्यां 'नः' पूर्वे पूर्वजनाः वि चक्रिरे। यस्यां देवाः असुरान् अभ्यवर्तयन्। गवाम् अश्वानां वयसः च विष्ठा पृथिवी नः भगं वर्चः दधातु।

[ हिन्दी ] *पूर्वजों के आदर्श की स्मृति*—जिस पृथिवी पर हमारे पुरातन पूर्वज पुरुषोंने विविध भाँति के आदर्श कार्य किए हैं। जिस पर सात्विक विभूतियोंने आसुर विभूतियों को जकड दिया है। तथा जो पृथिवी सत्वगुण प्रधान गो आदि पशु प्राणी, रजोगुणप्रधान घोडे आदि पशु प्राणी, तमः प्रधान पक्षि-प्राणियों की विशिष्ट निवासभूमि है, वह पृथिवी हमें सर्वविध ऐश्वर्य और वर्चस् (विशेष प्रभाव) से संपन्न करे।

* पीयूष० * यस्यां पृथिव्यां 'नः' अस्माकं पूर्वे पूर्वजनाः अस्माकं परमप्राचीनाः वंशमूलपुरुषाः वि चक्रिरे विविधमाध्यात्मिकाधिदैविकाधिभौतिकाभ्युदयसाधनं कर्म कृतवन्तः। पूर्वे पूर्वजना इत्यत्र प्रथमपूर्वपदस्य विगृह्यस्थितिः पूर्वान् पूर्वतरानित्युभावपि बोधयति। यस्यां चास्यां देवाः सत्वप्रधाना विभूतयः असुरान् तमःप्रधाना विभूतीः अभ्यवर्त-

यन् अभितोऽवर्तन्त न्यगृह्णन्त परिजिग्युरिति भावः। यस्यां च गवाम् एतदुपलक्षणेन दृष्टसत्त्वगुणजीवानां, अश्वानामिति दृष्टरजोगुणजीवानां, वयस इति दृष्टतमोगुणजीवानां च चिष्ठा विशेषेण निवासस्थानमस्ति। एषु यथायथं सत्त्वादिगुणानामनपायदर्शनाद् गवादिपशूनां निर्देशः 'गावो रम्भन्ति गान्धार'(या० शि० ११८) मित्यादिवत्। सेयं पृथिवी नोऽस्मभ्यं भगं सर्वप्रकारकमैश्वर्यं वर्चः यतो दर्शनादेव विद्वान् वा वीरो वा धनी वा अन्यद् वा किंचन वरणीयगुणवत्त्वं विशेषतः प्रतीयेत तत्तेजो वर्च इत्युच्यते, तद् दधातु स्थापयतु। आद्यपादयोर्द्वादशाक्षरत्वाज्जगती। षट्पदा त्र्यवसानेत्ययुक्तमतथात्वादिति ॥ ५ ॥

६

**विश्वम्भरा वसुधानी प्रतिष्ठा हिरण्यवक्षा जगतो निवेशनी।**
**वैश्वानरं बिभ्रती भूमिरग्निमिन्द्रऋषभा द्रविणे नो दधातु॥**

* ज्योत्स्ना * [ अन्वयः ] विश्वम्भरा वसुधानी प्रतिष्ठा, हिरण्यवक्षाः, जगतः निवेशनी वैश्वानरम् अग्निं बिभ्रती इन्द्रऋषभा भूमिः नः द्रविणे दधातु।

[ हिन्दी ] *धन की प्रार्थना*—विश्वका भरण करने वाली, धन को धारण करने वाली, गृहरूपा, सुवर्ण की खानरूप वक्षःस्थलवाली, समस्त नश्वर पदार्थों का घर, सब में प्रविष्ट अग्निको धारण करनेवाली, इन्द्र के द्वारा सिक्त यह भूमि हमें धन या बल में स्थापित करे।

* पीयूष० * विश्वं बिभर्तीति **विश्वम्भरा** विश्वस्य भरणकर्त्री, वसूनि दधातीति **वसुधानी** मणिरत्नादिधनानां धारयित्री **प्रतिष्ठा** स्थावराद्यात्मकविश्वस्याश्रयरूपा गृहरूपत्वात् 'गृहा वै प्रतिष्ठा' (श० १।१।१।१९) इति श्रुतेः। हिरण्यं वक्षस्तद्रूपमस्या इति **हिरण्यवक्षाः**। अतिकठ-

न्त्वात् आकरात्मना मध्यस्थत्वाच्च हिरण्यस्य वक्षस्त्वमुक्तम्। वक्षसि काठिन्यस्यैव प्रशस्तत्वात्। **जगतो** नश्वरस्य समस्तसंसारस्य जङ्गमस्य जीवजातस्य वा **निवेशनी** आयतनभूता **वैश्वानरं** विश्वस्मिन्नपि प्रतिगतमग्निं **अन्तर्बिभ्रती** धारयन्ती 'यथाग्निगर्भा पृथिवी' (श० १४।६।४।२१) इति श्रुतेः। **इन्द्रऋषभा** इन्द्रः ऋषभः वृषभः सेक्ता यस्याः सा वर्षकर्मकर्त्रा इन्द्रेण सिक्ता। यद्वा इन्द्रः ऋषभो वत्सो यस्याः। ऋषभशब्दोऽत्र गोवत्सवाची भाव्युपचारात्। पठ्यते चेन्द्रस्य पृथिव्या वत्सत्वं पृथुचरित्रे यथा—'कृत्वा वत्सं सुरगणा इन्द्रं सोममदूदुहन्। हिरण्मयेन पात्रेण वीर्यमोजो बलं पयः॥' ( भा० ४।१८।१५ ) इति। सेयं **भूमिः** पृथिवी **नः** अस्मान् **द्रविणे** बले धने वा ( निरु० ८।१ ) स्वामित्वेन **दधातु** स्थापयत्वित्याशीः। द्वितीयचतुर्थपादयोर्द्वादशाक्षरत्वाज्जगतीच्छन्दः। पञ्चपदा शक्वरी, त्र्यवसाना षट्पदा जगतीत्यसङ्गतम्॥ ६॥

७

**यां रक्षन्त्यस्वप्ना विश्वदानीं देवा भूमिं पृथ्वीमप्रमादम्।**
**सा नो मधु प्रियं दुहामथो उक्षतु वर्चसा॥**

❋ ज्योत्स्ना ❋ [ अन्वयः ] विश्वदानीं भूमिं यां पृथ्वीम् अस्वप्नाः देवाः अप्रमादं रक्षन्ति। सा नः प्रियं मधु दुहाम्, अथो वर्चसा उक्षतु।

[ हिन्दी ] *पृथिवीकी देवताओं द्वारा रक्षा*—समस्त इच्छित वस्तुओं को देने वाली, एक बीज के अनन्त फल देने के कारण भूमगुणवता, जिस पृथ्वी की नहीं सोनेवाले [ सर्वदा जागरूक ] देवता सावधानी से रक्षा करते हैं। वह पृथ्वी हमें अभिलषित मधुर फल देवे, तथा हमें वर्चस् [ प्रभावपूर्ण कर्तव्यशक्ति ] से संपन्न करे।

* पीयूष० * विश्वदानीं सर्वस्याभीप्सितस्य दात्रीं भूमिं भूमगुणवतीं एकस्य बीजस्यानन्तफलदातृत्वात् । यां पृथ्वीं भूमिम् अस्वप्नाः स्वापो निद्रा तद्रहिताः अस्वप्नवन्तो जागरूकाः । देवाः विबुधाः । 'न वै देवाः स्वपन्ती'ति ( श० ब्रा० ३।२।२।२२ ) श्रुतेः । अप्रमादं सर्वदावहिताः सन्तो रक्षन्ति पालयन्ति । सा पृथ्वी नोऽस्मभ्यं प्रियमभीप्सितं मधु मधुरं फलं दुहां दोग्धु । अथो अपि च 'नः' वर्चसा तेजसा उक्षतु सिञ्चतु । वयं यथा वर्चस्विनो भूयास्म तथा कुर्यादित्यर्थः । श्रूयते हि वर्चस्विनः सर्वकर्मसामर्थ्यम्—'यद्वै वर्चस्वी कर्म चिकीर्षति शक्नोति वै तत्कर्तुम' ति ( श० ब्रा० ५।२।५।१२ ) 'रक्षन्ति-असुवप्ना' 'पृथिवी' मिति व्यूहैः प्रस्तारपङ्क्तिश्छन्दः ॥ ७ ॥

८

यार्णवेऽधिसलिलमग्र आसीद् यां मायाभिरन्वचरन् मनीषिणः ।
यस्या हृदयं परमे व्योमन् सत्येनावृतममृतं पृथिव्याः ।
सा नो भूमिस्त्विषिं बलं राष्ट्रे दधातूत्तमे ॥

* ज्योत्स्ना * [ अन्वयः ] या अग्रे अर्णवे अधिसलिलम् आसीत् । यां मनीषिणः मायाभिः अन्वचरन् । यस्याः पृथिव्याः अमृतं हृदयं परमे व्योमन् सत्येन आवृतम् ( अस्ति ) । सा भूमिः नः उत्तमे राष्ट्रे त्विषिं बलं दधातु ।

[ हिन्दी ] *पृथ्वी की प्राचीन स्थिति*—जो पृथिवी पहिले समुद्र में जल के भीतर थी और जिसको मन के निग्रहीता तपश्चर्यान्वित हिरण्याक्ष आदि व्यक्तियों ने जानकारी से अनुगमन किया। तथा जिस पृथिवी का अमर जीवभूत हृदय उत्कृष्ट द्युलोक ( चन्द्रमा ) में है, जिसे सत्यस्वरूप देवताओं ने अपने लिए वरण ( स्वीकार ) कर रखा है । वह भूमि हमारे उत्तम देश में दीप्ति और बल को स्थापित करे ।

❀ पीयूष० ❀ **या** पृथिवी **अग्रे** पूर्वं **अर्णवे** समुद्रे **अधिसलिलम्** जलान्तः स्थिता **आसीत्** । **यां** च **मनीषिणः** मनस ईशयितारो मनोनिग्रहीतारस्तपश्चर्यान्विता हिरण्याक्षादयः **मायाभिः** प्रज्ञानैः (निरु० १२।१७) **अन्वचरन्** भूम्याः सविधे सलिल एवासीदन् । पूर्वं हि पृथिव्याः सलिले स्थितिरासीत् । अथ स्वतपश्चर्यया ब्रह्मणावाप्तवरो हिरण्याक्षो नामासुरः कदाचिद्रसातलेऽम्बुमध्ये जगाम । तत्र च धरणिधारकं भगवन्तं वराहमाक्रोशयामास, समवाप च वराहेण शरीरविमोक्षणमिति भागवतादि-(३।१८) पुराणेषु स्पष्टम् । **यस्याश्च पृथिव्याः अमृतम**विनाशि **हृदयं** जीवभूतं देवयजनं स्थानं **परमे** उत्कृष्टे **व्योमन्** व्योम्नि **सत्येन** सत्यस्वरूपेण देवजातेन 'सत्यमेव देवा' इति (श० ब्रा० १।१।१।४) श्रुतेः । **आवृतं** सर्वतोभावेनाङ्गीकृतमस्ति । तथा च याजुषश्रुतौ—'पुरा क्रूरस्य विसृपो विरप्शिन्नुदादाय पृथिवीं जीवदानुम् । यामैरयँश्चन्द्रमसि स्वधाभिस्तामु धीरासो अनुदिश्य यजन्ते ।' (शु० य० १।२८) इति । **सा भूमिर्नो**ऽस्माक**मुत्तमे** प्रशंसनीये **राष्ट्रे** देशे **त्विषिं** दीप्तिं **बलं** वीर्यं **दधातु** स्थापयतु । अत्र प्रथमेनावसानेन पौराणिकी वराहावतारसंबन्धिनी भूम्युद्धारकथा, द्वितीयेन जीवभूताया देवयजनात्मिकायाः पृथिव्या द्युलोकवर्तित्वं, तृतीयेन चाशीरुच्यते । 'वियोमन् सत्येन आवृतम्' 'दधातु उत्तमे' इति व्यूहेभ्यः द्वाषष्ट्यक्षरत्वाद् विराडष्टिश्छन्दः ॥८॥

९

**यस्यामापः परिचराः समानीरहोरात्रे अप्रमादं क्षरन्ति ।**
**सा नो भूमिर्भूरिधारा पयो दुहामथो उक्षतु वर्चसा ॥**

❀ ज्योत्स्ना ❀ [ अन्वयः ] **यस्याम् अहोरात्रे परिचराः आपः समानीः अप्रमादं क्षरन्ति । भूरिधारा सा भूमिः नः पयः दुहाम्, अथो वर्चसा उक्षतु ।**

[ हिन्दी ] झरने और वर्षा—जिस पृथिवी पर दिनरात झरनों के जल बराबर तथा निरन्तर गिरते हैं। उन झरनों के द्वारा बहु धारावती यह भूमि हमारे लिये वृष्टि के जल को भी प्राप्त करे, तथा अन्न से हमें समृद्ध बनावे।

॥ पीयूष० ॥ यस्यां पृथिव्यां परिचराः स्रोतस्यः आपः वारीणि समानीः समानपरिमाणेन अप्रमादम् अनवधानताविरहेण, अहोरात्रे रात्रिन्दिवं क्षरन्ति श्च्योतन्ते। एवं स्रोतसां नानात्वाद् भूरिधारा प्रभूतधारावती सा विश्वस्य धारयितृत्वादिना पूर्वमुक्ता भूमिः नोऽस्माकं कृते पयः वृष्टिलक्षणमुदकं दुहां दोग्धु। अथो अथ च वर्चसा अन्नेनास्मान् उक्षतु सिञ्चतु समर्धयतु। गङ्गायमुनादिमहानदीनामपि स्रोतोरूपेणैवोद्गतत्वात्, एकदेशे पततां स्रोतसां च परितश्चारित्वोपलम्भान्महानदीनामाकराणि परिचरशब्देनात्र व्यपदिश्यन्ते। वर्चः इत्यन्ननामसु निघण्टौ ( २।७ ) पठ्यते ॥ ९ ॥

१०

यामश्विनावमिमातां विष्णुर्यस्यां विचक्रमे।
इन्द्रो यां चक्र आत्मनेऽनमित्रां शचीपतिः।
सा नो भूमिर्विसृजतां माता पुत्राय मे पयः॥

॥ ज्योत्स्ना ॥ [ अन्वयः ] याम् अश्विनौ अमिमाताम्। यस्यां विष्णुः विचक्रमे। यां शचीपतिः इन्द्रः आत्मने अनमित्रां चक्रे। सा नः भूमिः माता पुत्राय मे पयः विसृजताम्।

[ हिन्दी ] देवता और पृथिवी—जिसे अश्विनीकुमार देवताओं नें नापा है। जिस पर विष्णुदेव नें विशिष्ट पैरों का डेग रखा है। और जिसे 'शची' पति इन्द्रनें अपने लिए शत्रुओं से रहित बनाया है, वह हमारी भूमि माता, पुत्र स्वरूप मेरे लिए बढ़ाने वाले पयस् का प्रदान करे।

* पीयूष० * **यां भूमिम् अश्विनौ देवौ अमिमाताम**मियत्तया परिमाणं निश्चिक्युः। कदाचिदश्विनौ देवौ पृथिवीं परिमापयतामिति पूर्वेतिहासः। **यस्यां विष्णुर्देवः विचक्रमे** विशेषेण त्रिभिः पदैः क्रान्तवान्। रूपेण वामनः सन्नपि स्वपौरुषं दर्शयामासेति विक्रमणं विष्णोः। **यां च पृथिवीं शचीपतिः** कर्मणामधिपतिः। शचीति कर्मनाम ( निघं० २।१ ) यद्वा शचीनाम्न्या देव्याः पतिः **इन्द्रो:** देवः **आत्मने** स्वस्य हिताय **अनमित्रां** शत्रुरहितां **चक्रे** विदधे। सा अश्विभ्यां मिता, विष्णुना क्रान्ता, इन्द्रेण अशात्रवीकृता च **नो**ऽस्माकमस्मत्संबन्धिनी भूमिः माता जननी पुत्राय तनुजाय यथा पयः क्षीरं विसृजते प्रेमातिशयेनात्मनश्च्यावयति तथा पालनकर्तृत्वान्माता पृथिवी पार्थिवशरीरधारित्वात्तनुजाय **पुत्राय मे मह्यं पयः** आप्यायनसाधनमन्नरसादि **विसृजतां** प्रददात्विति भावः। त्र्यवसाना षट्पदा महापंक्तिर्जगतीच्छन्दः ॥१०॥

११

**गिरयस्ते पर्वता हिमवन्तोऽरण्यं ते पृथिवि स्योनमस्तु।**
**बभ्रुं कृष्णां रोहिणीं विश्वरूपां ध्रुवां भूमिं पृथिवीमिन्द्रगुप्ताम्। अजीतोऽहतो अक्षतोऽध्यष्ठां पृथिवीमहम्॥**

* ज्योत्स्ना * [ अन्वयः ] **हे पृथिवि! ते पर्वताः** गिरयः हिमवन्तः 'सन्तु'। ते अरण्यं स्योनम् अस्तु। अहम् अजीतः अहतः अक्षतः (सन्) बभ्रुं कृष्णां रोहिणीं विश्वरूपां ध्रुवां भूमिं पृथिवीम् इन्द्रगुप्तां पृथिवीम् अध्यष्ठाम्।

[ हिन्दी ] *पृथ्वी के भेद*—**हे पृथिवि!** तुमारे पर्वत अन्नवान् तथा जल संपन्न बनें। तुमारा जंगल सुखकारक बने। मैं अजेय, अहिंसित (दब्बू न रहकर), साधनों से सम्पन्न होकर पिङ्गला, काली, लाल, नानारूपा, कठिन तथा भुरभुरी, विशाल, इन्द्र के द्वारा रक्षित पृथिवी का अधिष्ठाता बनूं।

* पीयूष० * हे पृथिवि ! ते तव त्वत्संबन्धिनः पर्वताः अद्रयः। गिरयः अन्नवन्तः 'अन्नं वै गिरश्छन्दः' ( श० ब्रा० ८।५।२।५ ) इति श्रुतेः। मेघवन्तो वा गिरिशब्दस्य मेघवाचित्वात् ( निघं० १।१० )। हिमवन्तः शीतलाः अप्सु हिमत्वस्य स्वाभाविकत्वाद् गुणगुणिनोरभेदेन जलवन्तश्च सन्त्विति शेषः। तथा ते त्वत्संबन्धि अरण्यं सिंहव्याघ्रतस्करादिभिया रमणीयतामनाप्तं वनं स्योनं सुखकरं अस्तु भवतु। अहं स्तोता त्वत्प्रसादात् अजीतः अजितः परैरनभिभूतः सर्वदा विजयीत्यर्थः। अहतः केनाप्यहिंसितः। अक्षतः केनाप्युपकरणेन अक्षीनः सन् बभ्रुं पिङ्गलवर्णां, कृष्णां श्यामवर्णां, रोहिणीं लोहितवर्णां, विश्वरूपां चित्ररूपामिति। एता एव क्रमेण 'मटियरा, करैली ( काली ), बलधूसरी (बलुई),चोपर, इति वा भाषायां प्रसिद्धास्ताम्। तथा ध्रुवां कठिनां भूमिं भूमगुणवतीं विप्रकीर्णां 'दूमट' इत्याख्यातां च पृथिवीं पृथुत्वगुणसंपन्नां विशालामिति भावः। इन्द्रगुप्ताम् इन्द्रेण पर्जन्येन स्वामिना वा गुप्तां रक्षितां पृथिवीं भूमिम् अध्यष्ठामधितिष्ठेयं स्वामित्वेनात्रस्थितो भूयासमिति याञ्चा। षट्पदा त्र्यवसाना विराडष्टिः। व्यूहेन त्वष्टिः संभवति ॥११॥

## १२

यत्ते मध्यं पृथिवि यच्च नभ्यं यास्त ऊर्जस्तन्वः संबभूवुः।
तासु नो धेह्यभि नः पवस्व माता भूमिः पुत्रो अहं पृथिव्याः।
पर्जन्यः पिता स उ नः पिपर्तु ॥

* ज्योत्स्ना * [ अन्वयः ] हे पृथिवि ! यत् ते मध्यम्, च यत् 'ते' नभ्यम्, 'च' ते याः ऊर्जः तन्वः संबभूवुः। नः तासु धेहि। नः अभिपवस्व। उ भूमिः माता ( अस्ति )। अहं पृथिव्याः पुत्रः ( अस्मि )। पर्जन्यः पिता ( अस्ति )। सः नः पिपर्तु।

[ हिन्दी ] *पुनीत देशों में स्थिति*—हे पृथिवी ! जो तुमारा जम्बूद्वीप मध्यभाग है और जो अभयप्रद नाभिस्थानीय भारत

वर्ष है। तथा जो बल और प्राण शक्ति से संपन्न पुण्यप्रद भूभाग है, उनमें हमें रखो, और हमारे दोषों को हटाओ। क्योंकि मेरी पृथ्वी माता है। मैं उस पृथिवी का पुत्र हूँ। पर्जन्य देवता मेरा पिता है। वह हमारा पालन और मनोरथों का पूरण करे।

* पीयूष० * हे **पृथिवि ! यत् ते मध्यं** मध्यस्थानीयो जम्बूद्वीपः 'यो वायं द्वीपः कुवलयकमलकोशाभ्यन्तरकोशः' (भा० ५।१६।५) इत्युक्तेः च तथा **यत् ते नभ्यं** नाभिस्थानीयो भारतवर्षः अभयदातृत्वात् 'अभयं नाभिः' इति ( श०ब्रा० १।१।२।२३ ) श्रुत्यवगमात्, भारतस्य अभयदातृत्वेन पुराणेषु स्मृतत्वाच्चेति। तथा **ते** तव पृथिव्याः **याः ऊर्जः** 'ऊर्ज बलप्राणनयोः' आध्यात्मिकाधिदैविकाधिभौतिकाख्यतापत्रयोपशमनेन बलदातॄणि विशिष्टादृश्यशक्तिसञ्चारणेन प्राणदातॄणि च **तन्वः** शरीरावयवभूतानि विस्तीर्णानि वा पुण्यक्षेत्र-तीर्थादीन्यायतनानि **संबभूवुः** पूर्वतनानां देवतानां महर्षीणां चानुग्रहेण सञ्जातानि सन्ति। **तासु** देशभूमिषु **नोऽस्मान् धेहि** स्थापय निवासार्थम्। तथा **नोऽस्मानभिपवस्व** सर्वविधरसान्नादिसमृद्ध्या स्थिरान्तर्वृत्तीन् रागद्वेषादिभिर्दोषैः संशोधय, दोषेष्वस्माकं प्रवृत्तिर्मा भवतु। यतः अस्माकं हि **भूमिर्देवता माता अस्ति।** पालनद्वारा शरीरनिर्मातृत्वात् पितुः पर्जन्यस्य जलात्मकरेतोधारयितृत्वाच। माता निवारयत्येव दोषेभ्यः। तथा **अहं** स्तोता च **पृथिव्याः पुत्रः अस्मि,** पुन्नरकं ततस्त्राता, नरकमिति 'नरकं न्यरकं नीचैर्गमनं नास्मिन् रमणं स्थानमल्पमप्यस्तीति वे' ति (१।११) निरुक्तात्। देशस्याधोगते रक्षयितेति केचित्। तथा **पर्जन्यो** जलाभिमानी देवः **पिता अस्ति,** अन्नाद्युत्पादनद्वारा पालयितृत्वात् निषेक्तृत्वाद्वा। **स** पर्जन्यो देवो **नोऽस्मान् पिपर्तु** पालयतु पूरयतु वा यथाकालं वर्षणद्वारास्माकं मनोरथानिति। उकारो हेतौ। पञ्चपदा त्र्यवसाना षट्पञ्चाशदक्षरा शक्वरी छन्दः। 'नभियम्' 'तनुवः' 'धेहि + अभि' इत्यक्षरसङ्ख्यापूर्तये व्यूहाः ॥ १२ ॥

१३

यस्यां वेदिं परिगृह्णन्ति भूम्यां यस्यां यज्ञं तन्वते विश्वकर्माणः।
यस्यां मीयन्ते स्वरवः पृथिव्यामूर्ध्वाः शुक्रा आहुत्याः पुरस्तात्॥
सा नो भूमिर्वर्धयद् वर्धमाना ॥

॥ ज्योत्स्ना ॥ [ अन्वयः ] यस्यां भूम्यां वेदिं परिगृह्णन्ति। यस्यां विश्वकर्माणः यज्ञं तन्वते। यस्यां पृथिव्याम् आहुत्याः पुरस्तात् शुक्राः ऊर्ध्वाः स्वरवः मीयन्ते। सा वर्धमाना भूमिः नः वर्धयत्।

[ हिन्दी ] *पृथ्वी का यज्ञ में उपयोग*—जिस भूमि पर यज्ञ के लिए वेदी का स्वीकार करते हैं। जिस पर श्रौत-स्मार्त आदि क्रियाओं में कुशल विद्वान् यज्ञ करते हैं। और जिस पर देवताओं के आवाहन के पहिले पवित्र तथा यूप के प्रमुख हिस्से के 'स्वरु' नामक यज्ञसाधन बनाए जाते हैं वह यज्ञादि कर्म से बढ़ने (पुष्ट होने) वाली पृथ्वी हमें सब प्रकार से बढ़ावे।

॥ पीयूष० ॥ यस्यां भूम्यां विद्वांसः वेदिं देवयजनस्थानं परिगृह्णन्ति स्वीकुर्वन्ति। यस्यां च भूम्यां विश्वकर्माणः नानाविधक्रियाकुशलाः श्रौतस्मार्तपौराणतान्त्रिककर्मविदः स्वस्वागमानुकूल्येन यज्ञं देवतोद्देशेन द्रव्यत्यागात्मकं कर्म तन्वते विस्तारयन्ति। यस्यां च पृथिव्यां आहुत्याः देवताह्वानलक्षणाया आहूतेः, आहूतिरेव परोक्षवृत्त्या आहुतिशब्देन निर्दिश्यत इति ब्राह्मणे ( ऐ० १।१।२ ) स्पष्टमुक्तत्वात्। पुरस्तात् पूर्वं शुक्राः शुद्धाः पुनीताः ऊर्ध्वाः यूपस्य शिरःप्रदेशीयाः स्वरवः स्वरुनामकयज्ञसाधनानि। छिद्यमानस्य यूपस्य प्रथमं भूमौ पतितः काष्ठखण्डः स्वरुः, बहुत्वविवक्षया बहुवचनम्। मीयन्ते निर्मीयन्ते। सा एवंभूता वर्धमाना विशाला भूमिः नः अस्मान् वर्धयत् वर्धयतु। पञ्चपदा त्र्यवसाना शक्करीच्छन्दः। 'भूमियामि' ति व्यूहः ॥१३॥

१४

यो नो द्वेषत् पृथिवि यः पृतन्याद्योऽभिदासान्मनसा यो वधेन।
तं भूमे रन्धय पूर्वकृत्वरि ॥

❀ ज्योत्स्ना ❀ [ अन्वयः ] हे पृथिवि ! नः यः द्वेषत्, यः पृतन्यात्, यः मनसा अभिदासात्, यः वधेन 'अभिदासात्'। हे पूर्वकृत्वरि ! भूमे ! तं रन्धय।

[ हिन्दी ] *शत्रुनाश करने की प्रार्थना*—हे पृथिवि ! हमसे जो वैर करता है, तथा जो हमारे विरुद्ध दलबन्दी बाँधता है, या मन से हमारे नाश का विचार करता है, या जो शरीर द्वारा हिंसा करता है। उसे विचार के पहिले ही कार्य संपादन करने वाली पृथिवी देवि ! तुम उस व्यक्ति को द्वेष भाव जागृत होने के पूर्व ही नष्ट कर दो।

❀ पीयूष० हे पृथिवि ! नः अस्मान् यः प्राणी द्वेषत् द्वेषं करोति। यश्च पृतन्यात् अस्माकं कृते पृतनां सेनामेकत्रीकर्तुमभिवाञ्छति। यश्च नः मनसा चित्तेन मानसिकव्यापारेण अभिदासात् सर्वत उपक्षिणोति। 'दसु उपक्षये' यश्च नो वधेन शारीरव्यापारेण अभिदासात् हन्तुमभिलषति। हे पूर्वकृत्वरि ! अभिलषितपदार्थानामाकरभूतत्वात् पूर्वमेव सर्वस्य कार्यजातस्य विधात्रि भूमे ! पृथिवि ! तं द्वेषिणं जनं रन्धय जहि। विद्वेषिणो हिंसाभावस्य जागरणात्पूर्वमेव त्वं तमेनं जहीति भावः। महाबृहतीच्छन्दः। 'पृतनियात्' 'यः अभि' इति व्यूहौ ॥ १४ ॥

१५

त्वज्जातास्त्वयि चरन्ति मर्त्यास्त्वं बिभर्षि द्विपदस्त्वं चतुष्पदः।
तवेमे पृथिवि पञ्च मानवा येभ्यो ज्योतिरमृतं मर्त्येभ्य
उद्यन्त्सूर्यो रश्मिभिरातनोति ॥

* ज्योत्स्ना * [ अन्वयः ] हे पृथिवि ! त्वज्जाताः मर्त्याः त्वयि चरन्ति । त्वं द्विपदः बिभर्षि । त्वं चतुष्पदः 'बिभर्षि' । इमे पञ्च मानवाः तव ( सन्ति ) ! येभ्यः मर्त्येभ्यः उद्यन् सूर्यः रश्मिभिः अमृतं ज्योतिः आतनोति ।

[ हिन्दी ] *मनुष्य जातिका पालन और सूर्यसे उपकार*—हे पृथिवि ! तुमसे उत्पन्न मरणधर्मी प्राणी तुमारे ऊपर चलते हैं। तुम दो पैरवाले तथा चौपाये जानवरों का धारण-पालन करती हो। ये ब्राह्मण-क्षत्रिय-वैश्य-शूद्र तथा निषाद जाति के पाँच मनुष्य तुमारे हो है, जिन मनुष्यों के लिये उदित होता हुआ ही सूर्य अपनी किरणों से अमृत ( स्वास्थ्य वर्धक ) ज्योति को फैलाता है ।

* पीयूष० * हे पृथिवि ! त्वज्जाताः त्वय्युत्पन्ना मर्त्याः मरणधर्माणो मनुष्याः त्वयि त्वत्प्रदेशेषु चरन्ति व्याप्रियन्ते । त्वं हि द्विपदः पादद्वयवतः नृतिर्यगादीन् बिभर्षि धारयसि पोषयसीति वा । अथ त्वं चतुष्पदः पादचतुष्टयवतः पश्वादिकांश्च बिभर्षि । अथ हे पृथिवि ! इमे दृग्बुद्धिगोचराः पञ्च पञ्चसङ्ख्याका मानवाः ब्राह्मण-क्षत्रिय वैश्य-शूद्र-निषादाख्याः, गन्धर्व-पितृ-सुर-देव-रक्षांसीति वा तव आश्रिताः सन्ति । येभ्यः पञ्चभ्यो मर्त्येभ्यः उद्यन्नयं सूर्यो रश्मिभिः किरणैः अमृतं मृत्युविरोधि ज्योतिः प्रकाशम् आतनोति विस्तारयति । द्व्यवसाना, शक्वरी छन्दः । 'मर्तिंयाः' 'तव + इमे' इति व्यूहौ ॥ १५ ॥

१६

ता नः प्रजाः सं दुह्रतां समग्रा वाचो मधु पृथि वि धेहि मह्यम् ॥

* ज्योत्स्ना * [ अन्वयः ] हे पृथिवि ! ताः प्रजाः नः संदुह्रताम् । समग्राः वाचः मधु मह्यं धेहि ।

[ हिन्दी ] प्रभुत्व और शास्त्रीयतत्त्व प्राप्तिकी प्रार्थना—हे पृथिवि ! पूर्वकथित समस्त दुपाये चौपाये जन्तु और पाँचो मनुष्य जातियाँ हमारे अधीन रहें। तथा समस्त वाङ्मय के मधुर सार में मुझे स्थापित करो।

* पीयूष० * हे पृथिवि ! ताः पूर्वनिर्दिष्टाः द्विपद-चतुष्पद-पञ्च-जनाख्याः प्रजाः प्रकर्षेण जायन्त इति प्रजाः सृष्टयः नः अस्मभ्यं संदुह्रतां दुग्धाम्। सर्वा अपि प्रजाः मह्यं नमन्तामिति भावः 'मह्यं नमन्तां प्रदिशश्चतस्रः' इत्युक्तेः। तथा समग्राः समग्रायाः षष्ठ्यर्थे प्रथमा। वाचः वाण्याः मधु सारभूतं मधुरं तत्त्वं मह्यम् मदर्थं धेहि स्थापय। सर्वस्यापि शब्दजातस्य सारमहं लभेयेत्याशीः। अथवा ताः बहुविधाः प्रजाः मह्यं समग्रा वाचः संदुह्रताम्। बहुदेशभाषाभाषिणां तत्तद्भाषावाक्पटुत्वं मयि समागच्छत्वित्यर्थः। साम्नी त्रिष्टुप्छन्दः ॥ १६ ॥

## १७

विश्वस्वं मातरमोषधीनां ध्रुवां भूमिं पृथिवीं धर्मणा धृताम्।
शिवां स्योनामनुचरेम विश्वहा ॥

* ज्योत्स्ना * [ अन्वयः ] विश्वहा विश्वस्वम् ओषधीनां मातरं धर्मणा धृतां ध्रुवां भूमिं शिवां स्योनां पृथिवीम् अनुचरेम।

[ हिन्दी ] *विश्व परिभ्रमण की अभिलाषा*—हम सर्वदा प्राणियों की धनभूता, अन्न की जननी, सत्य आदि वेदप्रतिपादित क्रियात्मक धर्म के द्वारा धारण की हुई, पर्वतादि रूप से कठिन, एवं उपजाऊ रूपसे भूमगुणवती, कल्याणरूपिणी, सुखप्रदा पृथिवी का परिक्रमण करते रहें। ( अर्थात् हम सब जगह अबाध गति से आदरपात्र होकर जावें)।

* पीयूष० * वयं विश्वहा विश्वाहा सर्वेष्वहःसु सर्वदा इति भावः। विश्वस्वं सर्वेषामपि प्राणिनां जीवनदातृत्वाद्धनभूताम् ओषधीनां

गोधूमधान्यादिकानां **मातरमुत्पादयित्रीं धर्मणा** सत्यवदनाग्निहोत्रादिवेद-प्रतिपादितेन क्रियाकलापेन **धृतामवष्टब्धां ध्रुवां** पर्वताद्यात्मना कठिनां, **भूमिं** भावयित्रीम् अन्नाद्युत्पत्तये उर्वरात्वेन प्रसिद्धां **शिवां** कल्याण-स्वरूपां **स्योनां** सुखप्रदां **पृथिवीं** जगतीतलमनुचरेम परिभ्रमाम। अप्रतिहतगतयो वयं सर्वदा सर्वत्र भवेमेत्याशीः। द्व्यक्षरन्यूनत्वाद् विराण्महाबृहती ॥ १७ ॥

१८

**महत्सधस्थं महती बभूविथ महान् वेग एजथुर्वेपथुष्टे।**
**महाँस्त्वेन्द्रो रक्षत्यप्रमादम्।**
**सा नो भूमे प्ररोचय हिरण्यस्येव सन्दृशि मा नो द्विक्षत कश्चन ॥**

* ज्योत्स्ना * [ अन्वयः ] **हे भूमे! महत् सधस्थं ( इति ) महती बभूविथ। ते वेगः, एजथुः, वेपथुः महान् ( अस्ति )। त्वा महान् इन्द्रः अप्रमादं रक्षति। सा नः हिरण्यस्य इव सन्दृशि प्ररोचय। नः कः चन मा द्विक्षत।**

[ हिन्दी ] *पृथिवी की महत्ता*—**हे पृथिवि! बड़े यज्ञों के लिए तुम विशाल बनी हो। तुमारी गति, अन्न का उत्पादन, एवं कम्प महान् है। अतएव अतिमहान् ऐश्वर्यसंपन्न सूर्य देवता सावधानी से तुमारी आकर्षण से रक्षा करते हैं। इस प्रकार महत्वपूर्ण भूमि हमें सोने के समान देखने में कान्ति-संपन्न करे, और हमसे [ हमारी न्यायपरायणता के कारण ] कोई भी डाह न करे।**

* पीयूष० * **हे भूमे! महत्** द्रव्य-देश-काल-फलादिना बृहत् **सधस्थं** सह तिष्ठन्ति ऋत्विजो यत्रेति सधस्थं यज्ञकर्म, तत्कर्तव्यमिति त्वं **महती**

महत्त्वशालिनी विस्तृता वा बभूविथ जातासि। ते तव वेगः गमनसामर्थ्यं महानस्ति। यावद्धि सूर्यः एकस्मिन् वर्षे विचरति तावदियं भूमिः स्वल्पेन कालेन तिक्रामतीति महावेगत्वमेतस्याः। एवं ते तव एजथुः हर्षमूलकं कम्पनं, तच्च प्रभूतसस्यसंपत्या दिशां प्रसादेन च लक्ष्यते। वेपथुः भयशोकमूलकं कम्पनम्, एतच्च भूचलनाद्यौत्पातिकतया लक्ष्यते। एतदुभयमपि ते महानस्ति प्राचुर्येण लाभहानिसम्पादयितृत्वात्। अत एव त्वा त्वां महान् कर्मणा महत्त्वशाली इन्द्रः परमैश्वर्यसंपन्नः सूर्यो देवः अप्रमादं सावधानतया रक्षति स्वीयेनाकर्षणेन धारयति। सा एवंविधा त्वं नः अस्मान् हिरण्यस्येव सुवर्णस्येव सन्दृशि दर्शने प्ररोचय वर्चस्वितया कान्त्या दर्शनीयतमान्कुरु। यथा हिरण्यं दर्शनादेव मनः प्रलोभयत्येवमस्मानपि सार्वदेशिकानां मध्ये शरीर-गति-कर्म-बल-विद्यादिभिर्दर्शनीयतमानादर्शभूतान् विधेहि। तथा न्यायपरायणतया नोऽस्मान् कश्चन कोऽपि प्राणी मा द्विक्षत द्वेषं कुर्यादिति। त्र्यवसाना षट्पदातिशक्वरीच्छन्दः। 'त्वा + इन्द्रो, रक्षति + अप्रमादम्' 'हिरण्यस्य + इव' इति व्यूहाः ॥१८॥

१९

**अग्निर्भूम्यामोषधीष्वग्निमापो विभ्रत्यग्निरश्मसु।**
**अग्निरन्तः पुरुषेषु गोष्वश्वेष्वग्नयः॥**

* ज्योत्स्ना * [ अन्वयः ] भूम्याम् ओषधीषु अग्निः (अस्ति)। आपः अग्निं बिभ्रति। अश्मसु अग्निः ( अस्ति )। पुरुषेषु अन्तः अग्निः ( अस्ति )। गोषु अश्वेषु अग्नयः (सन्ति)।

[ हिन्दी ] *अग्निकी पार्थिव पदार्थों में व्यापकता*—भूमि में और ओषधियों में अग्नि है। जल भी अग्नि को धारण करते हैं। पर्वत या पत्थरों में अग्नि है। पुरुषों में भीतर अग्नि है। तथा गौ, घोड़े आदि पशुओं में भी भिन्न भिन्न नाम के अग्नि वर्तमान हैं।

* पीयूष० * पूर्वं हि षष्ठे मन्त्रे 'वैश्वानरं बिभ्रती भूमिरग्निमि' त्युक्तम्। तदेवात्र विशद्यते। भूम्यामन्नोत्पत्तिहेतुभूतायां पृथिव्यां, ओषधीषु आमयनाशिनीषु पिप्पलीशतावर्यादिषु 'ओषध्यः फलपाकान्ता' इत्युक्तेः फलपाकान्तासु धान्यगोधूमाद्योषधीषु च अग्निरस्ति। अन्नभुक्त्यनन्तरमौष्ण्यस्य सर्वजनवेद्यत्वात्। आपः जलानि च वडवानलत्वेन प्रख्यातम् अग्निं बिभ्रति धारयन्ति। एवं अश्मसु पर्वतेषु तदीयखण्डेषु वा अग्निर्वर्तते। परस्परसंघर्षणेन तेष्वग्निदर्शनात्। पुरुषेषु मनुष्येषु अन्तः मध्ये अग्निः प्रविष्टोऽस्ति। अत एव यदा ह्यग्निः पुरुषान्निःसृतो भवतीति स शैत्यमाप्तो मृत इत्युच्यते। अथ गोषु अश्वेषु च अग्नयः सन्ति। गवाश्वयोः सर्वपशूपलक्षकत्वम्। अग्नय इति बहुवचनं च नामान्तराभिप्रायेण। न्यङ्कुसारिणी बृहतीच्छन्दः। 'ओषधीषु + अग्निम्' 'बिभ्रति + अग्निः' 'गोषु + अश्वेषु + अग्नयः' इति व्यूहाः ॥१९॥

२०

अग्निर्दिव आतपत्यग्नेर्देवस्योर्व १न्तरिक्षम्।
अग्निं मर्तास इन्धते हव्यवाहं घृतप्रियम् ॥

* ज्योत्स्ना * [ अन्वयः ] अग्निः दिवः आतपति। अग्नेः देवस्य ऊरु अन्तरिक्षम् ( अस्ति )। मर्तासः हव्यवाहं घृतप्रियम् अग्निम् इन्धते।

[ हिन्दी ] *अग्नि की तीनों लोकों में स्थिति*—अग्नि ही द्युलोक में सूर्यरूप से तपता है। अग्नि देवता का ही विशाल अन्तरिक्षलोक है। मनुष्य लोग भी अपने कल्याण के लिए यज्ञिय हविष् को ले जानेवाले घृतप्रिय अग्नि को प्रदीप्त करते हैं।

* पीयूष० * अग्निरित्ययं देवः दिवः द्युस्थानात् आतपति सूर्यरूपेण। एतस्य हि अग्नेर्देवस्य उरु विस्तीर्णं अन्तरिक्षं मध्यस्थानमस्ति। मर्तासः मर्ताः 'आज्जसेरसुक्' मर्त्याः मरणधर्माणो मनुष्याः,

हव्यं वहति तं हव्यवाहं देवतोद्देशेन प्रदत्तहविषो वोढारम्। घृतं प्रियमस्यास्ति तं घृतप्रियं तक्रनिर्मन्थनोत्पन्नघृतप्रीतिम् अग्निं देवं स्वकल्याणाय इन्धते प्रदीपयन्ति यज्ञादिष्विति शेषः। उरोबृहती छन्दः। एकाक्षरन्यूनत्वाच्च निचृत्। 'तपति + अग्नेर्देवस्य + उरु + अन्तरिक्षमि' ति व्यूहः॥ २०॥

२१

अग्निवासाः पृथिव्यसितज्ञूस्त्विषीमन्तं संशितं मा कृणोतु॥

* ज्योत्स्ना * [ अन्वयः ] अग्निवासाः असितज्ञूः पृथिवी मा त्विषीमन्तं संशितं कृणोतु।

[ हिन्दी ] *प्रमुख बनने की प्रार्थना*—अग्नि के समान स्थितिसंपन्ना, रागद्वेषादि दोषों से विहीन व्यक्ति को जाननेवाली पृथिवी मुझे दीप्तिमान् एवं तीक्ष्ण अर्थात् सब बातों में अग्रगण्य बनावे।

* पीयूष० * एवं मन्त्रद्वयेन प्रशंसितस्याग्नेः प्रसङ्गादाह—अग्निवासाः अग्निरिव वासः स्थितिर्यस्याः। यथा ह्यग्निरङ्गीकृते पदार्थे सर्वत्रैवात्मसात्कृत्यावतिष्ठते, तथैवेयं पृथिव्यस्माकं सर्वेष्ववयवेषु विद्यते पार्थिवशरीरत्वात्। तथा असितज्ञूः असितं संसारपर्यावर्तेऽपि रागद्वेषादिक्षुद्रजनसुलभदोषैरबद्धं पुरुषं जानातीत्यसितज्ञूः पृथिवी देवता मा मां त्विषीमन्तं दीप्तिमन्तं संशितं तीक्ष्णीकृतं सर्वत्रापि सद्विषये प्रथमपरिगणनीयमित्यर्थः। कृणोतु करोतु विदधातु। एकावसाना साम्नी त्रिष्टुप्छन्दः। 'पृथिवी + असितज्ञूः' इति व्यूहः॥ २१॥

२२

भूम्यां देवेभ्यो ददति यज्ञं हव्यमरङ्कृतम्।
भूम्यां मनुष्याजीवन्ति स्वधयान्नेन मर्त्याः।
सा नो भूमिः प्राणमायुर्दधातु जरदष्टिं मा पृथिवी कृणोतु॥

* ज्योत्स्ना * [ अन्वयः ] मनुष्याः भूम्यां अरङ्कृतं हव्यं यज्ञं ( च ) देवेभ्यः ददति । भूम्यां मर्त्याः स्वधया अन्नेन आजीवन्ति। सा भूमिः नः प्राणम् आयुः दधातु । पृथिवी मा जरदष्टिं कृणोतु।

[ हिन्दी ] *कर्मठता की इच्छा*—विचारवान् व्यक्ति भूमि में सुसंस्कृत हविष् को तथा यज्ञक्रियाओं को देवताओं के लिए करते हैं। भूमिमें ही मनुष्यगण पितरों के देय अन्न तथा मनुष्य पशु पक्षि आदि के लिए प्रदेय अन्न से सबको जिलाते हैं। इस भाँति सब की जीवनाधार यह भूमि हमें प्राण और आयु देवे। और पृथिवी देवता मुझे वृद्धावस्था में भी कार्यसमर्थ बनावे।

* पीयूष० * मनुष्याः मननेन कार्यकारिणः पुरुषाः भूम्यामधिकरणे अरङ्कृतमलङ्कृतं सुसंपादितं हव्यं देवप्रदेयभागं यज्ञं पूजास्तुतिहोमादिकर्म च देवेभ्यो द्युलोकवासिभ्यः ददति प्रवितरन्ति। तथा भूम्यामेव मर्त्या मरणधर्माणो मनुष्याः स्वधया पितृप्रदेयभागेन अन्नेन मनुष्यपशुपक्ष्यादिप्रदेयभागेन च कृत्वा पितृ-नर-पशु-पक्ष्यादिकान् सर्वानपि आजीवन्ति अन्तर्भावितण्यर्थोऽयमिति आजीवयन्ति। सैषा भूमिर्नोऽस्माकं प्राणं जीवनहेतुभूतं आयुः पूर्णावस्थां च दधातु धारयतु। पृथिवी देवता मा मां स्वकीयरसप्रदानेन तदाप्यायनेन च जरदष्टिं जरन्तमप्यश्नुवानं, वृद्धावस्थायामपि कार्यसामर्थ्ययुक्तं कृणोतु करोतु विदधातु॥ २२॥

२३

यस्ते गन्धः पृथिवि संवभूव यं बिभ्रत्योषधयो यमापः।
यं गन्धर्वा अप्सरसश्च भेजिरे तेन मा सुरभिं कृणु मा नो द्विक्षत कश्चन॥

* ज्योत्स्ना * [ अन्वयः ] हे पृथिवि ! ते यः गन्धः संवभूव। यम् ओषधयः बिभ्रति। यम् आपः 'बिभ्रति'। यं गन्धर्वाः

अप्सरसः च भेजिरे। तेन मा सुरभिं कृणु। कः चन मा न द्विक्षत।

[ हिन्दी ] पृथिवी के विशेष गुण गन्ध की व्यापकता—हे पृथिवि! तुम में जो पवित्र सुगन्ध विशिष्ट रूप से प्रगट हुआ है, जिसे सर्वविध ओषधियाँ धारण करती हैं। जिसे जल धारण करते हैं। तथा जिसे गन्धर्व और अप्सरस् नाम के देवगण भी बरतते हैं, उस पुनीत सुगन्ध से मुझे सुगन्धित बनाओ। जिससे हम किसी के घृणा के पात्र न बनें।

❀ पीयूष० ❀ हे पृथिवि! ते तव यः किल गन्धः परिचायको विशेषगुणो गन्धः संबभूव वैशिष्ट्येन प्रादुर्भूतः। पृथिव्या एव गन्ध-वत्वात् 'पुण्यो गन्धः पृथिव्याञ्च' ( गी० ७।९ ) इति भगवदुक्तेश्च। यं गन्धं ओषधयः गोधूमधान्यादयः पदार्थाः बिभ्रति धारयन्ति। यं च आपः जलानि बिभ्रति धारयन्ति। यं च गन्धर्वा अप्सरस इति देवयोनिविशेषाश्च भेजिरे सेवन्ते स्वस्य माहात्म्यख्यापनाय। तेन गन्धेन मा मां सुरभिं सुगन्धितं कृणु कुरु विधेहि। सुगन्धवत्वादेव च कश्चन कोऽपि प्राणी नोऽस्मान् मा द्विक्षत द्वेषं कुर्यात्। कस्यापि वयं घृणास्पदा न भवेमेति भावः। पञ्चाशदक्षरा विराडतिजगती छन्दः। 'बिभ्रति ओषधयः' इति व्यूहः॥ २३॥

२४

यस्ते गन्धः पुष्करमाविवेश यं संजभ्रुः सूर्याया विवाहे।
अमर्त्याः पृथिवि गन्धमग्रे तेन मा सुरभिं कृणु मा नो
द्विक्षत कश्चन॥

❀ ज्योत्स्ना ❀ [ अन्वयः ] हे पृथिवि! यः ते गन्धः पुष्करम् आविवेश। यं गन्धम् अमर्त्याः अग्रे सूर्यायाः विवाहे संजभ्रुः। तेन मा सुरभिं कृणु। नः कः चन मा द्विक्षत।

[ हिन्दी ] भोग साधनों में गन्धका विशेष स्थान—हे पृथिवि! जो तुमारा विशेषगुण गन्ध कमलपुष्प में प्रविष्ट हुआ और जिसे देवताओं ने भी सर्वप्रथम सूर्या के विवाह में अपनाया, उस सुगन्ध से मुझे सुरभित करो। तथा हमसे कोई भी व्यक्ति द्वेष न करे अर्थात् हमें छोटी दृष्टि से न देखे।

* पीयूष० * हे पृथिवि! यः ते विशेषगुणो गन्धः पुष्करं कमलकुसुमम् आविवेश प्रविष्टोऽभूत्। 'पुष्करपर्णं हि प्रजापतिर्भूमिमप्रथयदि' ति पुष्करेण पृथिव्याः संबन्धोऽपि श्रूयते। यं च गन्धं पुष्करगन्धं अमर्त्याः देवाः अग्रे सर्वतः प्रथमं सूर्यायाः सूर्यपुत्र्याः विवाहे पाणिग्रहणकर्मणोऽवसरे संजभ्रुः अहरन् सञ्चित्य स्वस्मिन् स्थापयामासुः। सूर्याया विवाहोऽत्र चतुर्दशे काण्डे श्रूयते। तेन पुष्करगन्धेन मा मां सुरभि सुगन्धसंपन्नं कृणु कुरु विधेहि। नोऽस्मान् पुष्करगन्धधारिणः कश्चन कोऽपि व्यक्तिः मा द्विक्षत द्वेषं मा विदध्यात्। एतेन भोगशालित्वं स्वस्य काम्यते। पञ्चपदा जगती। 'सूरियाया' इति व्यूहः॥ २४॥

२५

यस्ते गन्धः पुरुषेषु स्त्रीषु पुंसु भगो रुचिः।
यो अश्वेषु वीरेषु यो मृगेषूत हस्तिषु।
कन्यायां वर्चो यद् भूमे तेनास्माँ अपि संसृज मा नो
द्विक्षत कश्चन।

* ज्योत्स्ना * [ अन्वयः ] हे भूमे! यः ते गन्धः पुरुषेषु स्त्रीषु (अस्ति)। 'तेन' पुंसु भगः रुचिः (भवति)। उत यः अश्वेषु वीरेषु (अस्ति)। यः मृगेषु हस्तिषु (अस्ति)। यत् कन्यायां वर्चः (अस्ति)। तेन अस्मान् अपि संसृज। नः कः चन मा द्विक्षत।

[ हिन्दी ] *स्पृहणीय जवानी*—हे पृथिवि ! जो तुमारा विशेष-गुण गन्ध पुरुष और स्त्रियों में वर्तमान है। जिसके पार्थिव आकर्षण से पुरुषों में स्पृहा और अभिलाषा है। जो गन्ध घोड़े और वीर पुरुषों में [ वीरत्व द्वारा प्रगट ] है। जो गन्ध सिंह आदि मृगपशु तथा हाथियों में [ निर्भयता में प्रख्यात ] है। जो कुमारी बालिका में लावण्य रूप से है, उससे हमें संयुक्त करो। इस स्पृहणीय जवानी के कारण हमारा कोई भी व्यक्ति विरोध न करे।

*पीयूष०* हे भूमे ! पृथिवि ! यस्ते विशेषगुणो गन्धः पुरुषेषु पुंव्यक्तिषु स्त्रीषु स्त्रीव्यक्तिषु चास्ति। तेन च गन्धेन हेतुना पुंसु पुरुषव्यक्तिषु भगः स्त्रीणां सेव्यत्वम्, तत्र रुचिरभिलाषश्च भवति। उत अपि च यो गन्धः अश्वेषु अर्वत्सु हयेषु वीरेषु शौर्यप्रधानपुरुषेषु अस्ति। तथा यो गन्धो मृगेषु आरण्यग्राम्यसिंहादिपशुषु हस्तिषु करिषु चास्ति। यत् यो गन्धः कन्यायां कमनीयायां कुमार्यां वर्चः लावण्यं तद्रूपेणास्ति। तेन गन्धेन लावण्येन च अस्मानपि संसृज संयोजय। तथा नोऽस्मान् कश्चन कोऽपि मा द्विक्षत मा विद्विषेदिति। यद्वा पुंसु 'पुंस अभिवर्धने' अभिवर्धिष्णुषु व्यक्तिषु भगः षड्विधमैश्वर्यं रुचिर्दीप्तिः प्रीतिर्वास्ति। तथा अश्वेषु 'अशूङ् व्याप्तौ' अशनवत्सु पक्षिषु, वीरेषु 'वीर विक्रान्तौ' विक्रान्तेषु पुत्रेषु, मृगेषु गतिमत्सु सिंहादिपशुषु, हस्तिसु च यो गन्धः, कन्यायां च यद्वर्चस्तेनास्मान्संसृजेति समानमितरत्। एतेन साधुयुवत्वं प्रार्थ्यते। शक्वरी छन्दः। 'अशुवेषु' इति व्यूहः ॥ २५ ॥

२६

**शिला भूमिरश्मा पांसुः सा भूमिः सन्धृता धृता।**
**तस्यै हिरण्यवक्षसे पृथिव्या अकरं नमः ॥**

* ज्योत्स्ना * [ अन्वयः ] सन्धृता धृता सा भूमिः, शिला भूमिः अश्मा पांसुः ( इति अस्ति )। तस्यै हिरण्यवक्षसे पृथिव्यै नमः अकरम् ।

[ हिन्दी ] *पृथिवी की प्रणति*—अन्नादिजीवनसाधनों को उत्पन्न करने वाली 'सन्धृता,' एवं जीवनोपयोगी वस्तुओं को प्रदान करने वाली 'धृता' भूमि, पहाड़ी, दूमट, कंकरीली, बलुई भेद से चार प्रकार की है। इस नानारूपा सुवर्ण की खानरूप वक्षःस्थलवाली पृथिवी के लिए मैं नमस्कार करता हूँ।

* पीयूष० * तत्र तावत् सन्धृता धृता इति द्विविधा भूमिः। यस्यामन्नादि नानाविधं जीवनधारकं गुरु पदार्थजातं सम्यगुत्पद्यते सा सन्धृता। यस्यां च जीवनोपयोगीनि दारुपुष्पादीनि संभवन्ति, लोहरजतादिखनिर्वोपलभ्यते सा धृता। इति सा पूर्वं स्तुता भूमिः पृथ्वी शिला भूमिः अश्मा पांसुरिति चतुर्धा अस्ति। तत्र शिलाप्रायो भूप्रदेशः पर्वतीयः। प्रभूतसस्योत्पादनशाली च भूमगुणवत्वाद् भूमिशब्देनात्र निर्दिष्टः। अश्म शर्करा तत्प्रायो देशः शर्करिलः ( अमरको० २।१।११ ), पांसुः सिकता तत्प्रायः प्रदेशः सिकतिलः ( अमरको० २।१।११ ) एता एव चतस्रो भूम्यो हिन्दीभाषायाम् क्रमेण 'पथरीली, दूमट, कंकड़ीली, बलुई' नाम्ना कीर्त्यन्ते। एवं प्रभूतभेदशालिन्यै तस्यै पूर्वं स्तुतायै हिरण्यवक्षसे सुवर्णाकरं वक्षःस्थानीयमित्येतादृश्यै पृथिव्यै देव्यै नमः अकरम् करोमि। 'छन्दसि लुङ्लङ्लिटः'। 'कृमृदृरुहिभ्यश्छन्दसि'। अनुष्टुप्छन्दः ॥ २६ ॥

२७

यस्यां वृक्षा वानस्पत्या ध्रुवास्तिष्ठन्ति विश्वहा।
पृथिवीं विश्वधायसं धृतामच्छा वदामसि ॥

* ज्योत्स्ना * [ अन्वयः ] यस्यां वानस्पत्याः वृक्षाः ध्रुवाः विश्वहा तिष्ठन्ति । (तां) विश्वधायसं पृथिवीं धृतां अच्छ वदामसि ।

[ हिन्दी ] *'धृता' पृथिवी*—जिस पर पुष्प के बाद फल-देनेवाले वृक्ष निश्चित रूपेण सब दिन रहते हैं। उस फल रूप प्रभूत सात्त्विकाहार उपजानेवाली पृथिवी को हम 'धृता' नाम से कहते हैं।

* पीयूष० * यस्यां भूम्यां वानस्पत्याः पुष्पप्रसवानन्तरं फलवन्तो वृक्षास्तरवः 'वानस्पत्यो फलैः पुष्पादि' त्यमरोक्तेः ( २।४।६ ) । ध्रुवाः स्थायित्वेन विश्वहा सर्वेष्वहःसु तिष्ठन्ति । तां विश्वधायसं विश्वं बहुलं दधाति फलप्रदानद्वारा सात्विकं जीवनमिति विश्वधायास्तां पृथिवीं धृतां नाम अच्छ वदामसि वदामो वयमिति शेषः । मन्त्रैरेभिराकराणां लक्षणद्योतनं भवतीति विज्ञानपथिकाः । अनुष्टुप्छन्दः ॥ २७ ॥

२८

उदीराणा उतासीनास्तिष्ठन्तः प्रक्रामन्तः ।
पद्भ्यां दक्षिणसव्याभ्यां मा व्यथिष्महि भूम्याम् ॥

* ज्योत्स्ना * [ अन्वयः ] भूम्याम् उदीराणाः उत आसीनाः, 'उत' तिष्ठन्तः, 'उत' प्रक्रामन्तः, दक्षिणसव्याभ्यां पद्भ्यां 'पृथिवीं' मा व्यथिष्महि ।

[ हिन्दी ] *पृथिवी को कष्ट न पहुँचाना*—पृथ्वी पर चलते, बैठते, खड़े, तथा दौड़ते हुए हम लोग अपने दाहिने बांये दोनों पैरों से पृथिवी को कष्ट न पहुँचावें।

* पीयूष० * एवं भूमेर्भेदानुपदिश्य ( ११,२६ मं० ) अग्निगर्भत्वं च तस्याः (६ मं०) परिज्ञाप्य निवासभूतत्वादस्माकं प्रत्यहं प्रतिक्षणं च तत्र

पादनिक्षेपेण पराभवो भवतीति सोऽत्र क्षमाप्यते उदीराणां इति। भूम्यां पृथिव्याम् उदीराणाः सर्पन्तः उत्त अथवा आसीनाः उपविष्टा वा, तिष्ठन्तः ऊर्ध्वावस्थायिनो वा प्रक्रामन्तः प्रकृष्टं क्रमणं धावनं तद्वन्तो वा वयं दक्षिणसव्याभ्यामुभाभ्यामपि पद्भ्यां चरणाभ्यां मा व्यथिष्महि व्यथयेम, छन्दसि लुङः सार्वकालिकत्वात्। 'पृथिवीमि' ति पूर्वतोऽनुषञ्जनीयं सामर्थ्यात्। एवं चानेन—'समुद्रवसने देवि पर्वतस्तनमण्डिते। विष्णुपत्नि नमस्तुभ्यं पादस्पर्शं क्षमस्व मे' इति प्रातःस्मृतिरप्यनुगृह्यते। अनुष्टुप्छन्दः। 'भूमियामि' ति व्यूहेऽप्येकाक्षरन्यूनत्वान्निचृत् ॥ २८ ॥

२९

विमृग्वरीं पृथिवीमा वदामि क्षमां भूमिं ब्रह्मणा वावृधानाम्।
ऊर्जं पुष्टं बिभ्रतीमन्नभागं घृतं त्वाभि निषीदेम भूमे ॥

* ज्योत्स्ना * [ अन्वयः ] क्षमां भूमिं ब्रह्मणा वावृधानाम्, ऊर्जं पुष्टं घृतम् अन्नभागं बिभ्रतीं विमृग्वरीं पृथिवीम् आ वदामि—हे भूमे ! त्वा अभि निषीदेम।

[ हिन्दी ] अच्छी भूमि के लक्षण—बीज को सहनेवाली, अधिक उपजानेवाली, वेद तथा यज्ञों से समृद्ध, रस (विटामिन) युक्त, पुष्ट तथा चिकने अन्न को धारण करनेवाली 'विमृग्वरी'—दुर्लभ—पृथिवी को निवेदन करता हूँ कि—हे पृथिवि ! तुमारे चारों ओर हम लोग बैठे रहें। अर्थात् ऐसी तुम हमें प्राप्त होकर कभी हमसे अलग न होवो।

* पीयूष० * विमृग्वरीं गवेषणेन प्राप्यां पृथिवीं भूभागं आ वदामि तं प्रति कथयामि, किमिति चतुर्थे पादे उच्यते—हे भूमे ! पृथिवि ! त्वा त्वामभिनिषीदेम परितो वयं त्वदीयफलभोक्तृत्वेनावतिष्ठेम राजानमिव। कीदृशी भूमिर्विमृग्वरीत्युच्यते—क्षमां सर्वस्याप्युप्तस्य बीजस्य

सहनशीलां सर्वविधान्नफलमूलजननीमिति भावः। भूमिं भूमगुणवतीमतिशयफलदात्रीं, ब्रह्मणा वेदेन यज्ञेन च वावृधानां यस्यां वेदाध्ययने यज्ञादिविध्यनुष्ठाने शास्त्रत आदेशो मनसश्च प्रवृत्तिः समुदियात्ताम्। तथा ऊर्जं 'ऊर्ज बलप्राणनयोः' बलप्राणप्रदान्नरस (विटामिन) युक्तं पुष्टं दृढं घृतं स्नेहसमन्वितं च अन्नभागं खाद्यवस्तुनः सेव्यमंशं बिभ्रतीमिति विमृग्वरीविशेषणानि। क्षमादिगुणयुता हि पृथ्वी सर्वैरपि विमृग्यत इति विमृग्वरीत्युच्यते। त्रिष्टुप्छन्दः। 'त्वा अभि' इति व्यूहः॥ २९॥

३०

**शुद्धा न आपस्तन्वे क्षरन्तु यो नः सेदुरप्रिये तं निदध्मः।**
**पवित्रेण पृथिवि मोत्पुनामि॥**

* ज्योत्स्ना * [ अन्वयः ] हे पृथिवि! नः तन्वे शुद्धाः आपः क्षरन्तु। यः नः 'अपां' सेदुः तम् अप्रिये निदध्मः। मा पवित्रेण उत्पुनामि।

[ हिन्दी ] *शुद्ध जल की प्रार्थना*—हे पृथिवि! हमारे शरीर के लिए निर्दोष शुद्ध जल बहे। जो हमारे लिए अहितकर जल भाग है, उसे हम अप्रिय देश में रखते हैं। क्योंकि मैं अपने को वेदाध्ययन या वैदिक अनुष्ठानों से पवित्र करता हूँ।

* पीयूष० * विमृग्वरीं प्रत्युच्यते—हे पृथिवि! भूमे! नोऽस्माकं तन्वे वपुरर्थं शरीरसन्धारणाय शुद्धा निर्दुष्टाः आपः जलानि क्षरन्तु श्च्योतन्ताम्। यश्च नोऽस्माकमपां सेदुः 'षिध गत्याम्' गमनार्हः अग्राह्यो ऽहितकरत्वादीदृशो जलभागस्तमश्रादिहेयगुणविवर्धकः, तं अप्रिये शास्त्रैरप्रशस्ते प्रदेशे निदध्मः स्थापयामः। नन्वस्मदर्थमेव किमिति शुद्धजलाभ्यर्थनेति चेद् यतो ह्यहं मा मां पवित्रेण ब्रह्मणा वेदेन तदध्ययनद्वारा तदीयानुष्ठानकर्मणा वा उत्पुनामि उत्कृष्टतया स्वशरीरं पूतं करोमि। विराड्गायत्रीच्छन्दः। 'तनुवे' इति व्यूहः॥ ३०॥

३१

यास्ते प्राचीः प्रदिशो या उदीचीर्यास्ते भूमे अधराद्याश्च पश्चात्।
स्योनास्ता मह्यं चरते भवन्तु मा नि पप्तं भुवने शिश्रियाणः॥

* ज्योत्स्ना * [ अन्वयः ] हे भूमे ! भुवने शिश्रियाणः मा निपप्तम् । ते याः प्राचीः प्रदिशः, याः उदीचीः 'प्रदिशः' याः 'च' ते अधरात् 'प्रदिशः', याः च पश्चात् 'प्रदिशः' ( सन्ति ), ताः चरते मह्यं स्योनाः भवन्तु ।

[ हिन्दी ] *सब से सुख की भावना*—हे पृथिवि ! तुमारे पीठ पर रहता हुआ मैं कभी किसी प्रकार न गिरूँ । तुमारे जो पूर्व के प्रदेशवासी, उत्तर के प्रदेशवासी, दक्षिण के प्रदेशवासी तथा पश्चिम के प्रदेशवासी प्राणी हैं वे जानेपर मेरे लिए सुखमय बनें । या चारों दिशाएँ सुखकारक बनें ।

* पीयूष० * हे पृथिवि ! भुवने लोके त्वदीये पृष्ठ इति भावः । शिश्रियाणः सेवमानो यत्र कुत्रापि संवसन्नहमित्यर्थः । मा निपप्तं रोगादिना संमानतो वा निपतितो मा भूयासम् । नन्वत्र पृथिव्याः किं विधेयमित्युच्यते- हे भूमे ! ते याः प्राचीः प्रदिशः बहुवचनोपदेशात् परोक्षप्रियत्वाच्च वेदवाचां प्रदिशः दिगाश्रयाणि भूतानि (निरु० ११।४१) । याश्च उदीचीः प्रदिशः औदीच्याः प्राणिनः याश्च ते अधरात् प्रदिशः दाक्षिणात्याः प्राणिनः याश्च पश्चात् प्रदिशः पाश्चात्याः प्राणिनः ताः सर्वा अपि प्रदिशः यद्वा पूर्वदक्षिणपश्चिमोत्तराभिधानाः प्रसिद्धा दिशः चरते कार्यवशाद्दर्शन- लिप्सया वेतस्ततो भ्राम्यते मह्यं प्रार्थिने स्तोत्रे स्योनाः सुखमया भवन्तु जायन्ताम् । त्रिष्टुप्छन्दः ॥ ३१ ॥

३२

मा नः पश्चान्मा पुरस्तान्नुदिष्ठा मोत्तरादधरादुत ।
स्वस्ति भूमे नो भव मा विदन् परिपन्थिनो वरीयो यावया वधम्

ॐ ज्योत्स्ना। ॐ [ अन्वयः ] 'हे भूमे' ! नः पश्चात् मा नुदिष्ठाः, पुरस्तात् मा 'नुदिष्ठाः'। उत्तरात् मा 'नुदिष्ठाः'। उत अधरात् 'मा नुदिष्ठाः'। हे भूमे ! नः स्वस्ति भव। परिपन्थिनः 'नः' मा विदन्। 'नः' वरीयः वधं यावय।

[ हिन्दी ] *सब देशों में निवास*—हे पृथिवि ! हमें पश्चिम के देशों से न हटाओ। पूर्व के देश, उत्तर के देश, तथा दक्षिण के देशों से भी न हटाओ। हमारे लिए कल्याणकारिणी बनो। विरोधीगण हमें न पावें। हमारे प्रति क्षिप्त जानेवाले विशिष्ट हनन को भी तुम हम से दूर करो।

ॐ पीयूष० ॐ हे पृथिवि ! नोऽस्माँस्तव स्तोतॄन् पश्चान्मा नुदिष्ठाः। पश्चादित्यादिदिग्वाचिनः शब्दाः, परमत्र सामर्थ्यात्तत्तद्दिगवस्थितदेशपरतयोन्नेयाः, दिशां विभुत्वात्ततो नोदनानुपपत्तेः। प्रदेशार्थकतया 'प्रदिश' इति वा पूर्वतोऽनुषञ्जनीयम्। ततश्च पाश्चात्यप्रदेशेभ्यो मा प्रेरयेः। देशतः प्रेरणं हि ततोऽपसारणं तन्मा कार्षीः। पुरस्तात् पूर्वप्रदेशेभ्यो मा नुदिष्ठाः मा प्रेरयेः। उत्तरात् औत्तरेयप्रदेशेभ्यो मा नुदिष्ठाः। उत तथा अधरात् दक्षिणप्रदेशेभ्यो मा नुदिष्ठाः। सर्वेष्वपि चतुर्दिगवस्थितप्रदेशेषु गतानामस्माकं कयापि हीनतयापसारणं मा भवतु। हे भूमे ! सर्वत्रैव नोऽस्माकं कृते स्वस्ति कल्याणदायिनी भव। तथा नोऽस्मान् परिपन्थिनो मार्गावरोधिनः प्रतिपक्षिणो विद्विषो मा विदन् अस्माकं महत्वं प्रभावं वा मा प्राप्नुवन्तु। 'विद्लृ लाभे'। तथा क्षुद्रहृदयैः परिपन्थिभिस्तदीयदेशनिवासात् सामर्षतया प्रयुक्तं वरीयः अत्यन्तं महदपि वधं हानिसम्पादकं कृत्यं यावय अस्मत्तः पृथक्कुरु। अन्यप्रदेशेऽवस्थितानामस्माकं तत्र तव दयार्द्रदृशा समेधमानानां तद्देशनिवासिभिरस्मदैश्वर्येण क्षुभ्यद्भिरस्मद्विनाशाय कृतोऽतिमहानपि प्रयत्नो वैफल्यमाश्रयेतेति भावः। पुरस्ताज्ज्योतिस्त्रिष्टुप्छन्दः 'सुवस्ति' इति व्यूहः॥ ३२॥

३३

यावत्तेऽभि विपश्यामि भूमे सूर्येण मेदिना ।
तावन्मे चक्षुर्मा मेष्टोत्तरामुत्तरां समाम् ॥

* ज्योत्स्ना * [ अन्वयः ] हे भूमे ! उत्तराम् उत्तरां समां मेदिना सूर्येण यावत् ते अभिविपश्यामि तावत् मे चक्षुः मा मेष्ट ।

[ हिन्दी ] *नेत्र की स्थिरता की प्रार्थना*—हे पृथिवि ! आनेवाले सब वर्षों में स्नेह रखनेवाले सूर्य देवता की कृपा से मैं जितना तुमको देख सकूँ उतने तक पार्थिव दोषों के द्वारा मेरा चक्षु इन्द्रिय नष्ट न होवे ।

* पीयूष० * हे भूमे ! पृथिवि ! उत्तरामुत्तरां समाम् उत्तरोत्तरेष्वागामिषु सर्वेष्वपि वर्षेषु, अन्यन्तसंयोगे द्वितीया । मेदिना मित्रेण स्निग्धेन 'ञिमिदा स्नेहने' सूर्येण तत्प्रसादादिति भावः । यावदहं ते तव प्रदेशानभिविपश्यामि अवलोकयामि तावत् कालपर्यन्तं मे मम स्तोतुः चक्षुः चक्षुरिन्द्रियं मा मेष्ट मापगतं भवतु । पार्थिवाद्रोगादिदोषान्मम चक्षुरिन्द्रियं मा नशदिति याच्ञा । अनुष्टुप्छन्दः । 'मेष्ट उत्तरामि' ति व्यूहः ॥३३॥

३४

यच्छयानः पर्यावर्ते दक्षिणं सव्यमभि भूमे पार्श्वम् ।
उत्तानास्त्वा प्रतीचीं यत् पृष्ठीभिरधिशेमहे ।
मा हिंसीस्तत्र नो भूमे सर्वस्य प्रतिशीवरि ॥

* ज्योत्स्ना * [ अन्वयः ] हे भूमे ! यत् शयानः दक्षिणं सव्यं पार्श्वम् अभि पर्यावर्ते । यत् उत्तानाः त्वा प्रतीचीं ( कृत्वा ) पृष्ठीभिः अधिशेमहे । तत्र हे सर्वस्य प्रतिशीवरि ! हे भूमे ! नः मा हिंसीः ।

[ हिन्दी ] सोने का अपराध—हे पृथिवि ! जो मैं सोता हुआ दहिने बायें करवट लेता हूँ। तथा सीधा उतान सोकर तुमारे सम्मुख न होताहुआ पीठ देकर सोता हूँ। इस अपराध में, अवहेलना करनेवाले के लिए समस्त काम-धन्धों को ठप करने वाली हे पृथिवि ! हमें न मारना, अर्थात् हमारे इन अपराधों को क्षमा करो।

* पीयूष० * पूर्वं दशमे मन्त्रे पृथिव्या मातृत्वमुक्तम्। मातुश्च श्रेयस्त्वात्तत्सविधे वयस्कव्यक्तेः शयनं, पर्यावर्तः, पराङ्मुखीभावश्च नोचित इति क्षमापयात—हे भूमे ! पृथिवि ! यदहं शयानः स्वपन् दक्षिणं पूर्वाभिमुखस्थितस्य दक्षिणदिगवस्थितं भागं, सव्यं वामं वा पार्श्वे कक्षयोरधोदेशभागं अभि अभिलक्ष्य पर्यावर्ते परिवर्तनं करोमि। यच्च उत्तानाः ऊर्ध्वमुखा भूत्वा त्वा त्वां मातरं पृथिवीं प्रतीचीं कृत्वा अनभिमुखीभूय पृष्ठीभिः स्वीयपृष्ठभागैर्वयमधिशेमहे स्वपामः। तत्रास्मिन्नपराधकदम्बके हे सर्वस्य प्रतिशीवरि ! 'शीङ् स्वप्ने' बाहुलकात् ष्वरच्। समस्तस्यापि कार्यजातस्यावहेलनकारिणां कृते प्रतिशायनशीले कार्यनाशकारिणीति भावः। यदि हि पृथ्वी स्वपृष्ठवासिभ्यः क्षुध्वान्नादि नोत्पादयेत्तर्हि सर्वमपि प्रणश्येदेवेति। हे भूमे ! भूमगुणवति मातः पृथिवि ! नोऽस्मान्मा हिंसीर्मा विनाशय। क्षमा नाम्नासीति क्षमस्वास्माकमपराधजातमिति। अतिजगतीच्छन्दः। 'परि + आवर्ते' व्यूहः ॥ ३४ ॥

३५

यत्ते भूमे विखनामि क्षिप्रं तदपि रोहतु।
मा ते मर्म विमृग्वरि मा ते हृदयमर्पिपम् ॥

* ज्योत्स्ना * [ अन्वयः ] हे भूमे ! यत् ते विखनामि तत् अपि क्षिप्रं रोहतु। हे विमृग्वरि ! ते मर्म मा 'अर्पिपम्'। (तथा) ते हृदयं मा अर्पिपम्।

[ हिन्दी ] *क्षति पूर्ति की प्रार्थना*—हे पृथिवि ! जो तुमारा प्रदेश मैं गहराई से खोदता हूँ वह भी जल्दी ही भर जाय। हे खोजनेकी वस्तुओंमें प्रशस्ते पृथिवि ! तुमारे मर्मस्थल को मैं दुःख नहीं पहुँचाता हूँ। और तुमारे हृदयभूत स्थान पर भी चोट नहीं पहुँचाता हूँ।

* पीयूष० * हे भूमे ! पृथिवि ! यत्ते प्रदेशमहं विखनामि विशेषेण खनाम्याकराद्युपलब्धये तदपि क्षिप्रं रोहतु पूर्तिमाप्नोतु। अपि-शब्दोऽत्र वास्तुनिर्माण-कन्द मूलादिनिमित्तेन क्रियमाणानां खननछेदनादि-लघुहिंसानामर्थाद्रोहणसूचकः । हे विमृग्वरि ! मार्गणीयेषु प्रशस्ये पृथिवि ! ते तव मर्म जीवनप्रदेशमवयवबन्धनहेतुभूतं स्थानं मा अर्पिपं व्यथितं नाकार्षम्। हिंसार्थकोऽत्र ऋधातुः। तथा ते तव हृद्यं केन्द्रप्रदेशं च मा अर्पिपं न हिनसानि। अनुष्टुप्छन्दः ॥ ३५ ॥

३६

ग्रीष्मस्ते भूमे वर्षाणि शरद्धेमन्तः शिशिरो वसन्तः।
ऋतवस्ते विहिता हायनीरहोरात्रे पृथिवि नो दुहाताम् ॥

* ज्योत्स्ना * [ अन्वयः ] हे भूमे ! ग्रीष्मः वर्षाणि शरत् हेमन्तः शिशिरः वसन्तः ( इति ) हायनीः ऋतवः विहिताः ( सन्ति )। हे पृथिवि ! ते अहोरात्रे ( च ) नः ते दुहाताम्।

[ हिन्दी ] *कालचक्र से क्षतिपूर्ति*—हे पृथिवि ! ग्रीष्म ( जेष्ठ आषाढ़ ) वर्षा ( श्रावण भाद्रपद ) शरत् ( आश्विन कार्तिक ) हेमन्त ( मार्गशीर्ष पौष ) शिशिर ( माघ फाल्गुन ) वसन्त ( चैत्र वैशाख ) ये एक वर्ष की छः ऋतुएँ जगत् के लिए हित-कारक हैं। हे भूमे ! ये छः ऋतुएँ तथा दिन रात हमारे उन खान, कन्द, मूल आदि के खोदे हुए स्थान, तथा तुमारे मर्म एवं हृदय स्थान, की क्षति को पूर्ण करें।

* पीयूष० * हे भूमे ! ग्रीष्मः निदाघः, वर्षाणि वर्षाः, शरत्, हेमन्तः, शिशिरः, वसन्तः इति षट् हायनीः हायन्यः 'वा छन्दसि' पूर्वसवर्णदीर्घः हायनं संवत्सरस्तत्संबन्धिनः ऋतवः समेषां कृते विहिताः विशेषेण हितकृतः सन्ति । हे पृथिवि ! ते ऋतवः अहोरात्रे च नोऽस्माकं ते तानि पूर्वमन्त्रोक्तानि खात-मर्म-हृदयस्थानानि दुह्राताम् दुहताम् प्रपूरयन्तु । अचो व्यत्ययः । 'दुह प्रपूरणे' । आर्षीपङ्क्तिश्छन्दः ॥ ३६ ॥

३७

यापसर्पं विजमाना यस्यामासन्नग्नयो ये अप्स्वन्तः ।
परा दस्यून् ददती देवपीयूनिन्द्रं वृणाना पृथिवी न वृत्रम् ।
शक्राय दध्रे वृषभाय वृष्णे ॥

* ज्योत्स्ना * [ अन्वयः ] या अपसर्पं विजमाना (आस्ते) । यस्याम् अग्नयः आसन् । ये अप्सु अन्तः 'अग्नयः' ( सन्ति, तेभ्यः ) देवपीयून् दस्यून् परा ददती, इन्द्रं वृणाना, वृत्रं न 'वृणाना' पृथिवी, शक्राय वृषभाय वृष्णे ( रूपं ) दध्रे ।

[ हिन्दी ] *योग्यता और पृथिवी की कृपा*—जो अशास्त्रीय मार्ग पर चलने वालों से कम्पित रहती है। तथा जिसके ऊपर आहवनीय दक्षिणाग्नि गार्हपत्य नाम की श्रौत अग्नियां हैं। एवं जिसके जल के भीतर अग्नि वर्तमान है, उन अग्नियों के द्वारा देव विरोधी नाशक जीवों को अपने फल—धन धान्य सुखभोगादि से वंचित करनेवाली, इन्द्र ( प्रमुख देवतत्व ) को अपनाती हुई, तथा वृत्र-पाप-को स्वीकार न करती हुई, यह पृथिवी पवित्र उत्साही कर्मठ उपकारी व्यक्ति के लिए अपना कामधेनुरूप प्रगट करती है।

* पीयूष० * या किल विश्वम्भरी सर्वैरभिलषितान्वेषणेन प्राप्या च पृथ्वी अपसर्पं सर्पतिर्गमने, सर्पतीति सर्पो गन्ता । गतौ कुत्सितार्थद्योत-

नायापशब्दस्ततः अविहितमार्गगामिनं पापिनं प्रति विजमाना कम्पमाना आस्ते। 'ओविजी भयसंचलनयोः'। तथा यस्यां भूम्यामग्नयो वितानाग्नय आहवनीय-गार्हपत्य-दक्षिणाग्न्याख्या आसन् सन्ति। बहुत्वोपदेशाद्विताग्नयः। तथा यस्यामप्सु जलेषु अन्तर्मध्ये ये अग्नय आसन् सन्ति। जले वडवानलरूपेण प्रसिद्धत्वेऽपि बहुषु स्थलेषु यागकर्मण्येव जलाधिकरणत्वेनाग्नाविव हूयमानत्वाज्जलेऽग्निवासः इष्ट एव। अग्निजन्यत्वादपां कारणगुणानामनुवर्तमानत्वात्। तेभ्योऽग्निभ्यो देवपीयून् देवविद्वेषिणः 'पीयतिर्हिंसाकर्मा' (निरु० ४।२५) दस्यून् उपहिंसयितॄणि भूतानि 'दसु उपक्षये'। परा ददती दानप्रातिलोम्यमाचरन्ती, आयतनं साहाय्यं वानाचरन्ती, इन्द्रम् ऐश्वर्यसंपन्नं मुख्यं देवतत्वं वृणानाङ्गीकुर्वती। वृत्रं पाप्मानं 'पाप्मा वै वृत्रः' (श० ब्रा० ११।१।५।७) इति श्रुतेः। न वृणाना परित्यजन्ती पृथिवी अस्ति। सैषा शक्राय शुद्धाय शुचये वृषभाय पुंस्त्ववैशिष्ट्यद्योतनाय वृषभशब्द इति पुंस्त्वसंपन्नाय कर्मण्याय व्यक्तये वृष्णे सेचकाय उपकर्त्रे नेत्रे दध्रे दधार स्वीयं कामधेनुरूपमित्यस्माभिरपि पृथिवीकृपाभिलाषिभिः शुचिभिः कर्मठैः संघीभूतैश्च भाव्यमिति। त्र्यवसाना पञ्चपदा। शक्वरीच्छन्दः॥ ३७॥

३८

यस्यां सदोहविर्धाने यस्यां यूपो निमीयते।
ब्रह्माणो यस्यामर्चन्त्यृग्भिः साम्ना यजुर्विदः।
युज्यन्ते यस्यामृत्विजः सोममिन्द्राय पातवे॥

* ज्योत्स्ना * [ अन्वयः ] यस्यां सदोहविर्धाने 'निमीयते'। यस्यां यूपः निमीयते। यस्यां यजुर्विदः ब्रह्माणः ऋग्भिः साम्ना अर्चन्ति। यस्यां इन्द्राय सोमं पातवे ऋत्विजः युज्यन्ते।

[ हिन्दी ] *पृथ्वी और यज्ञ*—जिस पर सदोमण्डप और हविर्धानमण्डप नामके दो यज्ञीय मण्डप बनते हैं। जिसमें यूप गाड़ा

जाता है। जिस पर यज्ञविधानवेत्ता ब्राह्मण लोग ऋक् मन्त्र और साम मन्त्रों से देवताओं की पूजा करते हैं। जिस पर इन्द्रदेवता को सोमरस पिलाने के लिए ऋत्विक् लोग इकट्ठे रहते हैं।

❀ पीयूष० ❀ 'यस्यामग्नय' इति पूर्वं यज्ञसाधनभूतानां वितानाग्नीनां निर्देशः कृत इति प्रसङ्गादन्यान्यपि पार्थिवानि यज्ञसाधनानि विव्रियन्ते यस्यामिति। यस्यां पृथिव्यां सदोहविर्धाने सदोमण्डपः हविर्धानमण्डपश्चेति द्वौ यज्ञीयमण्डपौ निमीयते निर्मीयेते। यस्यां च भूम्यां यूपः पशुनियोजनीयो यज्ञीयोऽष्टास्रीकृतः स्तम्भो निमीयते निर्मीयते। अथवा 'डुमिञ् प्रक्षेपे' इत्यस्मात् निखन्यते। यस्यां च यजुर्विदो यज्ञकल्पाम्नायवेत्तारः कुशला अध्वर्यवो वा ब्रह्माणः ब्राह्मणाः ऋग्भिर्नियताक्षरपादावसानैर्मन्त्रैः साम्ना ऋगाधारत्वेन गीयमानैः स्वरविशेषवद्भिर्मन्त्रैः अर्चन्ति पूजयन्ति देवानुपासन्ते। यस्यां च इन्द्राय देवमुख्याय सोमं सोमवल्लीरसं पातवे पातुं पाययितुमित्यर्थः। ऋत्विजो यागकारयितृत्वेन वृता विद्वांसो ब्राह्मणा युज्यन्ते युक्ता भवन्ति, ऐकमत्येन यथोपदेशं यथाधिकारं च कार्यं कुर्वन्ति। यदोयोगात्साकाङ्क्षस्य नैराकाङ्क्ष्यं चत्वारिंशत्तमेन मन्त्रेण भवति। त्र्यवसाना। महापंक्तिर्जगतीच्छन्दः। 'अर्चन्ति + ऋग्भिः' इति व्यूहः॥ ३८॥

## ३९

यस्यां पूर्वे भूतकृत ऋषयो गा उदानृचुः।
सप्त सत्रेण वेधसो यज्ञेन तपसा सह॥

❀ ज्योत्स्ना ❀ [ अन्वयः ] यस्यां पूर्वे भूतकृतः सप्त ऋषयः यज्ञेन तपसा सह वेधसः सत्रेण गाः उदानृचुः।

[ हिन्दी ] *पृथिवी और गोत्र प्रवर्तक महर्षि*—जिस पृथिवीपर प्राचीन ऐतिहासिक सात ऋषि श्रौतयज्ञ एवं तपश्चर्या के

साथ प्रजापति पद के लिए किए जाने वाले सत्रयाग के द्वारा 'गोत्र प्रवर्तक हैं' इस शब्द से पूजित हुए, या सप्तर्षियों ने अपने यज्ञ और तपश्चर्या के द्वारा भूमिके कई भागों को महत्व देकर पूजित किया।

॥ पीयूष० ॥ यस्यां पृथिव्यामस्यां पूर्वे प्राचीनाः भूतकृत ऐतिहासिकाः 'इति + ह + आस' इत्यर्थेनेतिहासशब्दस्य रूढेस्तद्वाचकोऽत्र भूतशब्दः। सप्त ऋषयो गोत्रप्रवर्तका जमदग्नि-भरद्वाज-गोतमा-त्रि-वसिष्ठ-कश्यप-विश्वामित्राख्या यज्ञेन श्रुत्युक्तेन स्वोचितेनेज्याकर्मणा तपसा द्वन्द्वसहनेन च सह युक्ताः वेधसः सत्रेण गोत्रप्रवर्तकत्वरूपप्रजापतित्वप्रापकेन यज्ञेन कृत्वा गाः 'गोत्रप्रवर्तका इम' इति गिर उदानृचुः उदानर्चुः समपूजयन्। अत्रैव यज्ञाद्यनुष्ठाय सप्तर्षिभिर्गोत्रप्रवर्तकत्वमासाद्य यावदाभूतसंप्लवं स्वप्रख्यापनमाचरितमिति महत्त्वं वसुधायाः। यद्वा गोशब्दः पृथिवीमभिधत्त इति गाः पृथिवीप्रदेशान् उदानृचुः समपूजयन् पुण्यक्षेत्रतया। अद्यापि सप्तर्षीणां ते त आश्रमास्तपोभूमित्वेन समर्च्यन्त एव धार्मिकैः। अनुष्टुप्छन्दः ॥ ३९ ॥

४०

सा नो भूमिरादिशतु यद्धनं कामयामहे।
भगो अनुप्रयुङ्क्तामिन्द्र एतु पुरोगवः ॥

॥ ज्योत्स्ना ॥ [ अन्वयः ] सा भूमिः नः यत् धनं कामयामहे (तत्) आदिशतु। (तत्र) भगः अनुप्रयुङ्क्ताम्। पुरोगवः इन्द्रः एतु।

[ हिन्दी ] पृथिवी से धनाभिलाषा—वह भूमि, जो धन हम चाहते हैं उसे देवे। इसके लिए 'भग' देवता अनुकूल उद्योग करे, और गौ देने वाला इन्द्र देवता यहां उपस्थित होवे।

* पीयूष० * सा पूर्वमाख्याता भूमिः पृथिवी नोऽस्मभ्यं यत् धनं वसु वयं कामयामहेऽभिलषामस्तदादिशतु प्रयच्छतु। तदर्थं भगो देवः अनुप्रयुङ्क्तां भूम्या धनप्रदानेऽस्मदानुकूल्येनोद्योगं कुर्यात्। पुरोगवः इन्द्रश्च एतु भूम्या धनप्रदानानुमतये। इन्द्रो हि स्तोतृभ्यो मुख्यतया गावो ददातीति पुरोगव उच्यते। इन्द्रो यथा स्वस्तोतृभ्यः उदारमनसा गावो ददाति, तथा स्तोतृभ्योऽस्मभ्यं भूमिर्दद्यादित्यर्थं इन्द्रोऽनुमन्यताम्। तदर्थं चात्र समेतु, बलधनयोर्दातृतमत्वात्। देवद्वयेनानुमतेयं न कार्पण्यमाचरिष्यतीति भगेन्द्रयोर्नैघण्टुकः संस्तवः। अनुष्टुप्छन्दः॥ ४०॥

## ४१

**यस्यां गायन्ति नृत्यन्ति भूम्यां मर्त्या व्यैलबाः।**
**युध्यन्ते यस्यामाक्रन्दो यस्यां वदति दुन्दुभिः।**
**सा नो भूमिः प्रणुदतां सपत्नानसपत्नं मा पृथिवी कृणोतु॥**

* ज्योत्स्ना * [अन्वयः] व्यैलबाः मर्त्याः यस्यां भूम्यां गायन्ति नृत्यन्ति। यस्यां युध्यन्ते। यस्याम् आक्रन्दः दुन्दुभिः वदति। सा भूमिः नः सपत्नान् प्रणुदताम्। पृथिवी मा असपत्नं कृणोतु।

[ हिन्दी ] *अजातशत्रु होने की प्रार्थना*—जिस पृथ्वी पर विविधदेशनिवासी मनुष्य आपस में मिलकर गाते हैं, तथा नाचते हैं। तथा कभी आपसमें स्वार्थवश युद्ध करते हैं। जिस पृथ्वी पर संग्रामकी सूचना देने वाला रणदुन्दुभि बजता है। वह पृथिवी हमारे शत्रुओं को हटावे। और मुझे अजातशत्रु बनावे।

* पीयूष० * इला पृथिवी। तत्संबन्धिनः प्रदेशा ऐलाः, तेषु वसन्तीति ऐलवाः। विविधाश्च त ऐलवा व्यैलबाः। बवयोरैक्यम्। विविधदेशनिवासिनः। मर्त्या मनुष्याः। यस्यां भूम्यां परस्परमेकीभूय संमताः

सन्तो हर्षोद्रेकेण गायन्ति नृत्यन्ति च। यस्यां च भूम्यां त एव व्यैलवा विविधदेशनिवासिनो मर्त्याः, परस्परं विमताः सन्तो द्वेषेण विजिगीषया युध्यन्ते सङ्ग्रामं कुर्वते स्वार्थसाधनाय। यस्यां च पृथिव्यां विजिगीषयैवाक्रमणसंसूचनाय आक्रन्दः आ समन्तात् क्रदति शब्दं करोत्यभिमुखं युद्धायेत्याक्रन्दो रणसूचको दुन्दुभिर्वदति उद्घोष्यते। सा एवंविधा सन्धि-विग्रह-यानाख्यसन्धित्रयाधारभूता भूमिः नोऽस्माकं सपत्नान् शत्रून् प्रणुदतां प्रकर्षेणापसारयतु। अपसार्य च समस्तानपि विद्विषः पृथिवी देवता सर्वकालं मा माम् असपत्नम् अविद्यमानशत्रुमजातशत्रुमिति भावः। कृणोतु करोतु। विराट् शक्वरीच्छन्दः। 'वि + ऐलबाः' इति व्यूहः॥ ४१॥

४२

यस्यामन्नं व्रीहियवौ यस्या इमाः पञ्च कृष्टयः।
भूम्यै पर्जन्यपत्न्यै नमोस्तु वर्षमेदसे॥

* ज्योत्स्ना * [ अन्वयः ] यस्यां व्रीहियवौ अन्नम् (अस्ति)। यस्याः इमाः पञ्च कृष्टयः ( संभवन्ति )। पर्जन्यपत्न्यै वर्षमेदसे भूम्यै नमः अस्तु।

[ हिन्दी ] *अन्नसे प्राणियों की उत्पत्ति*—जिस पृथ्वीपर जौ चावल विशेष रूप से खाद्य पदार्थ हैं। और जिस अन्न से ये ब्राह्मण क्षत्रिय वैश्य शूद्र निषाद नामकी पांच मनुष्य जातियां या मनुष्य पशु पक्षि देव असुर जातियां उत्पन्न होती हैं। ऐसी मेघद्वारा पालित वर्षाद्वारा बढनेवाली भूमि के लिए नमस्कार है।

* पीयूष० * यस्यां भूम्यां व्रीहियवौ धान्ये विशेषतः अन्नं खाद्यमस्ति। यस्याः पञ्चम्यर्थे षष्ठी। यस्मादन्नादिमाः प्रत्यक्षं दृश्यमानाः पञ्च पञ्चसंख्याकाः कृष्टयो मनुष्याः ब्राह्मण-क्षत्रिय-विट्-शूद्र-

निषादाख्याः, अथवा नृतिर्यक्पशुदेवासुरात्मकाः पञ्चविधाः प्राणिनः संभवन्ति । 'ता ( प्रजाः ) अन्नादेव संभवन्ति तस्माद्वन्नमेव प्रजाः' इति ( श० ब्रा० २।५।१।६ ) श्रुतेः । तस्यै **पर्जन्यपत्न्यै** पर्जन्यद्वारा पालितायै, तथा **वर्षमेदसे** वर्षाभिर्वृद्धिमीयुष्यै । मेदसा हि वृद्धः प्राणी पुष्टः प्रतीयत इति वर्षाभिरियं पृथिव्यपि नूतनसिकताभिर्वृद्धा रसेन चाप्यायिता सस्योत्पादिनी भवतीति संभवत्येतस्या वृद्धिः । यद्वा मेदस इत्यत्र दकारस्थाने धकारोऽभ्यर्हितस्तेन वर्षाभिर्मेधसे पवित्रतामाप्तवत्यै **भूम्यै पृथिव्यै नमोऽस्तु** नमस्काराणि संयुज्यन्ताम् । अनुष्टुप्छन्दः । 'भूमियै' इति व्यूहः ॥४२॥

## ४३

**यस्याः पुरो देवकृताः क्षेत्रे यस्या विकुर्वते ।**
**प्रजापतिः पृथिवीं विश्वगर्भामाशामाशां रण्यां नः कृणोतु ।**

* ज्योत्स्ना * [ अन्वयः ] यस्याः देवकृतः पुरः ( सन्ति ) । यस्याः क्षेत्रे ( पापाः ) विकुर्वते । ( एवं ) विश्वगर्भां पृथिवीं प्रजापतिः नः आशामाशां रण्यां कृणोतु ।

[ हिन्दी ] *पुण्यपुरियां और पृथ्वीकी रमणीयता*—जिस भूमिपर देवताओं से निर्मित काशी अयोध्या आदि अनेक पुरियां हैं । तथा जिसके पुण्य क्षेत्र में पाप विनष्ट होता है । ऐसी समस्त वाञ्छित वस्तु धारण करने वाली पृथिवी को प्रजापति देवता प्रत्येक दिशा में रमणीय बनावे ।

* पीयूष० * **यस्याः** पृथिव्याः **देवकृतः** देवैः स्वविशेषकार्येण कृताः निर्मिताः **पुरः** काशीमथुरायोध्याकाञ्च्यादयः पुरः सन्ति । यस्याश्च **क्षेत्रे** पुण्यप्रदेशे पुण्यक्षेत्रत्वेनाभिमते भूभागे **विकुर्वते** नष्टा भवन्ति पापा इति शेषः । तदेवं **विश्वगर्भां** सर्वविधाभीप्सितवस्त्वायतनभूतां **पृथिवीं** भूमिं **प्रजापतिर्देवो नोऽस्माकं** कृते **आशामाशां** प्रत्याशं प्रतिदिशं **रण्यां** रमणीयां **कृणोतु** करोतु विदधातु । विराडास्तारपङ्क्तिश्छन्दः ॥४३॥

४४

निधिं बिभ्रती बहुधा गुहा वसु मणिं हिरण्यं पृथिवी ददातु मे।
वसूनि नो वसुदा रासमाना देवी दधातु सुमनस्यमाना ॥

* ज्योत्स्ना * [ अन्वयः ] गुहा बहुधा वसु निधिं बिभ्रती पृथिवी मे मणिं हिरण्यं ददातु। सुमनस्यमाना वसुदा रासमाना देवी नः वसूनि दधातु।

[ हिन्दी ] 'कुप्य अकुप्य' धनकी प्रार्थना—अपने भीतरी हिस्से में नाना प्रकार की खानों को धारण करने वाली पृथिवी मुझे सर्वविध रत्न एवं सोने चाँदी रूप 'अकुप्य' धन को देवे। प्रसन्न चित्त, धनदायिनी, दानोन्मुख, पृथिवी देवी रत्न एवं सोने चाँदी से अतिरिक्त सब प्रकार के 'कुप्य' धनों को भी मुझे देवे।

* पीयूष० * गुहा गुहायां सप्तम्या डादेशः। स्वस्यान्तः प्रदेशे बहुधा बहुविधं वसु वसूनां धनानां निधिमाकरं पद्मादिनवनिधीन्वा। ते च नव यथा—'पद्मश्चैव महापद्मः शङ्खो मकरकच्छपौ। मुकुन्दकुन्दनीलाश्च खर्वश्च निधयो नव।' इति। बिभ्रती धारयन्ती पृथिवी मे मह्यं मणिं वज्रवैडूर्यमरकताद्यश्मजातं मौक्तिकादि च हिरण्यं सुवर्णरजतात्मकमकुप्यं धनं 'स्यात्कोषश्च हिरण्यं च हेमरूप्ये कृताकृते' इत्यमरोक्तेः (२।९।९१) ददातु प्रवितरतु। मणिहिरण्यादिकमेव किमु अपि तु सुमनस्यमाना प्रसन्नमानसा वसुदा धनदायिनी रासमाना दानोन्मुखी देवी पृथिवी नोऽस्माकं कृते वसूनि बहुत्वोपदेशात् सर्वाणि अकुप्यातिरिक्तानि कुप्यात्मकान्यपि धनानि दधातु धारयतु। जगतीच्छन्दः ॥ ४४ ॥

४५

जनं बिभ्रती बहुधा विवाचसं नानाधर्माणं पृथिवी यथौकसम्।
सहस्रं धारा द्रविणस्य मे दुहां ध्रुवेव धेनुरनपस्फुरन्ती ॥

* ज्योत्स्ना * [ अन्वयः ] विवाचसं नानाधर्माणं बहुधा जनं यथौकसं बिभ्रती पृथिवी अनपस्फुरन्ती ध्रुवा धेनुः इव द्रविणस्य सहस्रं धाराः मे दुहाम् ।

[ हिन्दी ] अनेकों कारबारों की अभिलाषा—अनेक भाषाभाषी, अनेक धर्मवाले, नानाप्रकार के मनुष्योंको यथास्थान धारण करती हुई यह पृथिवी अविचल रूपसे स्थिर गौकी भाँति, धन की हजारों धाराएँ मेरे लिए प्रदान करे। अर्थात् हमारे यहाँ अनेकों धन प्राप्ति के उपाय चलते रहें।

❀ पीयूष० ❀ विवाचसं नानाभाषाभाषिणं नानाधर्माणं नैकविधमर्यादावन्तं बहुधा बहुप्रकारकं जनं मनुष्यं यथौकसं यथास्थानं बिभ्रती धारयन्ती पृथिवी मे मह्यं द्रविणस्य धनस्य सहस्र धारा अनन्ताः शाखाः दुहां दोग्धु व्यवस्थापयत्वित्यर्थः। तत्र दृष्टान्तः—अनपस्फुरन्ती अङ्गानि किञ्चिन्मात्रमपि न परिचालयन्ती ध्रुवा सुस्थिरा धेनुः सवत्सा गौरिव। यथा हि धीराकम्पमाना च गौः साधु दुग्धे तथैवेयं वसुधास्मभ्यं सुस्थिरा सती स्वीयमन्तःस्थितं द्रविणं सर्वभाषाभाषिभ्यः सर्वधर्मानुयायिभ्यश्च साधु दुग्धाम्। जगतीच्छन्दः। 'ध्रुवा + इव' इति व्यूहः ॥ ४५ ॥

## ४६

**यस्ते सर्पो वृश्चिकस्तृष्टदंश्मा हेमन्तजब्धो भृमलो गुहा शये। क्रिमिर्जिन्वत्पृथिवि यद्यदेजति प्रावृषि तन्नः सर्पन्मोप सृपद्यच्छिवं तेन नो मृड ॥**

* ज्योत्स्ना * [ अन्वयः ] हे पृथिवि ! यः सर्पः, वृश्चिकः, तृष्टदंश्मा, हेमन्तजब्धः, भृमलः, क्रिमिः जिन्वत्, ते गुहा शये। यत् यत् प्रावृषि एजति, तत् सर्पत् नः मा उप सृपत्। यत् शिवं तेन नो मृड।

[ हिन्दी ] *विषैले जन्तुओं से रक्षा*—हे पृथिवि ! जो सर्प, बिच्छू तथा जिसके काट लेने से प्यास लगती है या जाडा लगता है या चक्कर आता है ऐसा कीटभक्षी विषैला जीव तुमारे ऊपर बिल में रहता है। और जो जो जन्तु वर्षा ऋतु में उत्पन्न होकर चलते हैं। वे कष्टकारी जीव मुझे प्राप्त न होवें। अर्थात् वे मुझे न काटें। और जो कल्याणकारी जीव हैं, उनसे मुझे सुख देवो।

* पीयूष० * हे पृथिवि ! यो जन्तुः ते तव गुहा गुहायामन्तर्बिल-रूपावकाशे शये शेते तन्मा उपसृपदित्यन्वयः। कोऽसौ गुहाशयो जन्तुजात इति विवृणोति-सर्पः चक्षुश्रवाः, वृश्चिकः प्रसिद्धः द्रुणः ( अ० को० २।५।१४ )। तृष्टदंशमा यस्य दंशेन मनुष्यस्तृषार्त एव भवत्येवंविधो ( बिसखोपडा गोधादि ) जीवः। हेमन्तजब्धः यस्य जब्धेन जग्ध्या भक्षणेन मनुष्योऽत्यन्तं हिमाक्रान्तो भवतीत्येवंविधो ( मशकादिः ) भ्रमलः यस्य दंशेन मनुष्यो घूर्णायित एवंविधः। यः किल क्रिमिः क्रिमिभिः कीटैः तृतीयायाः सुः। जिन्वत् जिन्वति प्रीतो भवति। कीटभक्षी विषधरो जीव इत्यर्थः। किं बहुना यद्यत् जीवजातं प्रावृषि वर्षाकाले एजति कम्पते प्रादुर्भवति परिदृश्यते वा तत् सकलमपि कृच्छ्रप्रदं जीवजातं सर्पत् इतस्ततः पृथिव्यां विचरत् नोऽस्मान् मा उपसृपत् प्राप्तं न भवतु। तस्य वयं दंशपात्रा मा भूमेति भावः। अथ यत् शिवं सुखकारकं जीव-जातं शुकसारिकादि तेन नोऽस्मान्मृड मृडय सुखय। निचृच्छक्करी। 'मा + उप' इति व्यूहः॥ ४६॥

४७

ये ते पन्थानो बहवो जनायना रथस्य वर्त्मानसश्च यातवे।
यैः सञ्चरन्त्युभये भद्रपापास्तं पन्थानं जयेमानमित्रमतस्करं यच्छिवं तेन नो मृड॥

* ज्योत्स्ना * [ अन्वयः ] 'हे पृथिवि !' ते ये जनायनाः बहवः पन्थानः (सन्ति)। 'च' रथस्य अनसः च यातवे वर्त्म (सन्ति)। यैः भद्रपापाः उभये सञ्चरन्ति, तं पन्थानं जयेम। अनमित्रम् अतस्करं यत् शिवं 'वर्त्म' तेन नो मृड।

[ हिन्दी ] *मार्ग की विजय*—हे पृथिवि ! तुम्हारे जो मनुष्यों के जाने के बहुत से (पगडण्डी, गली पटरी आदि) रास्ते हैं। तथा रथ एवं गाडी जाने के (स्ट्रीट, एवेन्यू, रोड आदि) बहुत से मार्ग हैं। जिनमें पुण्यात्मा और पापी, या सभ्य असभ्य दोनों ही आते जाते हैं उन मार्गों को हम जीतें, अर्थात्—योग्यता, अधिकार, प्रभाव से हम सबसे आगे मार्ग पाने के अधिकारी बनें। शत्रु और चोर डाकुओं से रहित जो अच्छा मार्ग है उससे हमें सुखी बनाओ। अर्थात् ऐसी विपत्ति न भोगें जिससे हमें कुमार्ग से जाना पड़े।

* पीयूष० * हे पृथिवि ! ते तव ये जनायनाः जनानां गमनसाधनभूता बहवः पन्थानः राजमार्गवीथीप्रभृतयः सन्ति। तथा रथस्य अश्वयानादेः अनसो गवादिशकटादेश्च यातवे यातुं वर्त्म वर्त्मानि सन्ति। यैः जन-रथादिमार्गैः भद्रपापाः पुण्यकृतः पापकृतः, सभ्या असभ्या वा, उभये द्वये अपि सञ्चरन्ति गच्छन्ति। तं सर्वविधं पन्थानं मार्गं जयेम सर्वतः प्रथमं लभेम। मार्गस्य प्रथमप्राप्तियोग्यतैव मार्गजयः। अस्मान् दृष्ट्वा अग्रे वर्तमाना अप्यन्ये प्रभावेणाधिकारेण योग्यतया च पृष्ठतो भवेयुरिति सर्वत्राप्यस्माकमेव मार्गः स्यात्। मार्गप्रदानस्य स्मृतिरपि भवति, यथा—'वृद्ध-भारि-नृप-स्नात स्त्री-रोगि-वर-चक्रिणाम्। पन्था देयो नृपस्तेषां मान्यः स्नातश्च भूपतेः।' (या० स्मृ० १।११७) इति। तथा हे पृथिवि ! अनमित्रमसपत्नम्। अतस्करं चोरसाहसिकाद्युपद्रवविरहितं यत् शिवं शोभनं साधुजनसंसेवनीयं वर्त्म अस्ति, तेन पथा नोऽस्मान्मृड सुखय। तेन पथास्माकं सर्वदा

गमनं स्यादिति । आपत्काले हि प्रायेण मनुजः शीघ्रतया लज्जया वान्त-र्धानादिवशेन कुपथा जिगमिषति । संपत्काले तु धीरत्वाद्विलम्बितेनापि निर्बाधपथा गच्छतीति विपत्कालोऽस्मान्नोपैत्विति भावः । अतिशक्वरी च्छन्दः । 'वर्त्म + अनसः' 'चरन्ति + उभये' 'जयेम + अनमित्रमि' ति व्यूहाः ॥ ४७ ॥

## ४८

मल्वं बिभ्रती गुरुभृद् भद्रपापस्य निधनं तितिक्षुः ।
वराहेण पृथिवी संविदाना सूकराय विजिहीते मृगाय ॥

॥ ज्योत्स्ना ॥ [ अन्वयः ] मल्वं बिभ्रती गुरुभृद् भद्रपापस्य निधनं तितिक्षुः वराहेण संविदाना पृथिवी सूकराय मृगाय विजिहीते ।

[ हिन्दी ] *परिश्रमी पर पृथिवी की कृपा*—कार्य करने में असमर्थ एवं अनावश्यक प्राणी अप्राणीरूप 'मल्व' ( मलवे ) को या शत्रु को भी धारण करती हुई, अधिक भार का वहन करने वाली, भले-बुरे व्यक्तियों के नाश को सहन करने वाली, गेहूँ चांवल आदि श्रेष्ठ खाद्यवस्तुओं से संपन्न यह पृथिवी अच्छा कर्तव्य करनेवाले अन्वेषक ( क्रियाशील ) व्यक्ति के लिए अपना कामधेनु स्वरूप स्पष्ट कर देती है। अथवा वराहरूपी विष्णुदेव के द्वारा उद्धृत यह पृथिवी सूकरस्वरूप भगवान् के लिए अपने मनोगत भावों को व्यक्त कर देती है।

॥ पीयूष० ॥ मार्गाधिकारिणो वयं भवेमेत्युक्तम् । तदर्थं वैशिष्ट्य-प्राप्तिरप्यर्हतेति तत्रोच्यते मल्वं यद्धि कार्येऽक्षममनावश्यकं चावकरादिकं तन्मल्वमित्युच्यते । अत एवेदृशं पदार्थं 'मलबा' इति व्यवहरन्ति राजस्थानीयाः । ततश्च पृथिव्या अनुपकारकं प्राण्यप्राणिजातं, शत्रुर्वा मल्वस्तं, बिभ्रती धारयन्ती अत एव गुरुभृत् अत्यधिकभार-

वाहिनी भद्रपापस्य सुकृतकारिणः पापकारिणश्च जनस्य निधनं पञ्चत्वं तितिक्षुर्मर्षयित्री । सुकृतकारिणो मृत्यौ न पृथिव्याः शोको, न च पापकृतो मरणे हर्ष इति वराहेण वराहारेण ( तु० निरु० ५।४ ) गोधूम-धान्यादिना संविदाना संपद्यमाना संपन्ना समृद्धेत्यर्थः सस्यशालिनी इयं पृथिवी सूकराय सुकराय शोभनकृतये मृगाय 'मार्गणं मृगणा मृगः' ( अ० को० ३।२।३० ) इत्युक्तेर्गुणगुणिनोरभेदेनान्वेषकाय जनाय विजिहीते स्वस्वरूपगुप्तिं त्यजति सर्वानपि कामान्दुग्धे इत्यर्थः । सूकर इति दीर्घश्छान्दसः पूरुष इतिवत् । यद्वा उत्तरार्धस्यान्यथा योजना—वराहेण सूकराकृतिना विष्णुना संविदाना संविन्ना प्राप्ता उद्धृतेति यावत् । पृथिवी सूकराय मृगाय वराहमृगरूपिणे विष्णवे विजिहीते विशेषतया स्वस्य ज्ञापनाय त्यजति लज्जां पत्ये योषिदिव । पुरस्ताज्ज्योतिस्त्रिष्टुप् ॥ ४८ ॥

## ४९

**ये त आरण्याःपशवो मृगा वने हिताःसिंहा व्याघ्रा पुरुषादश्चरन्ति उलं वृकं पृथिवि दुच्छुनामित ऋक्षीकां रक्षो अपबाधयास्मत् ॥**

❀ ज्योत्स्ना ❀ [ अन्वयः ] हे पृथिवि ! ते ये वने हिताः आरण्याः मृगाः पशवः, ( उत ) पुरुषादः सिंहाः व्याघ्राः चरन्ति ( तान् ) उलं वृकं दुच्छुनां ऋक्षीकां रक्षः ( च ) इतः अस्मत् अप बाधय ।

[ हिन्दी ] *हिंसक जन्तुओं से बचना*—हे पृथिवि ! तुमारे जो जङ्गल के हितकारी जङ्गली नानाविध मृग पशु हैं एवं मनुष्यों के खानेवाले शेर बाघ घूमते हैं, उन्हें तथा वनबिलाव, भेड़िये, दुष्ट कुत्ते, रीछ ( भालू ) या लकड़बग्घा और राक्षसों को इस स्थान से एवं हमसे दूर रखो ।

* पीयूष० * हे पृथिवि ! ते तव ये कीर्त्यमानाः वने कानने हिताः हितकारिणः आरण्या अरण्यचारिणः मृगाः 'कृष्णसार–रुरु–न्यङ्कु–रङ्कु शंबर–रौहिषाः। गोकर्ण–पृषतै–ण–र्श्य–रोहिताश्चमरो मृगाः।' (अ० को० २।५।१०) इत्युक्ता बहुविधा मृगजातीयाः पशवः चतुष्पादो जीवाः। तथा वन एव पुरुषादो मनुष्य-भक्षिणः सिंहाः केसरिणः व्याघ्राः द्वीपिनश्च चरन्ति परिभ्रमन्ति। एतान् सर्वान् तथा उलं आरण्यं जीवविशेषं वृकमीहामृगं, दुच्छुनां दुष्टाश्च ते श्वानश्च दुच्छूवानस्तेषां, कर्मणि षष्ठी, दुष्टान् शुनः ऋक्षीकां भल्लूकसंघं तरक्षुं वा, रक्षः रक्षोजातीयं च भूतं इतः अस्मात्स्थानादस्मन्निवासभूतात्, अस्मत् पञ्चम्या रूपम्। अस्मत्सकाशाच्च अपबाधय अपसारय परिवर्जय। जगतीच्छन्दः। 'बाधय + अस्मत्' इति व्यूहः। द्वितीये पादेऽक्षराधिक्यम्॥ ४९॥

५०

**ये गन्धर्वा अप्सरसो ये चारायाः किमीदिनः।**
**पिशाचान्त्सर्वा रक्षांसि तानस्मद् भूमे यावय॥**

* ज्योत्स्ना * [अन्वयः] हे भूमे ! ये गन्धर्वाः, अप्सरसः ये च अरायाः किमीदिनः पिशाचान् सर्वा रक्षांसि (सन्ति) तान् अस्मत् यावय।

[हिन्दी] *अदृश्य भूतों से बचाना*—हे पृथिवि ! जो गन्धर्व एवं अप्सरस् जाति है, तथा जो विचारे (दरिद्र), 'क्या खाँवें' इस प्रकार कहने वाले, मांसभोजी, सब प्रकार के राक्षस हैं उनसे हमें दूर रखो। अर्थात् वे हमको कभी ग्रहण न करें।

* पीयूष० * किञ्च हे भूमे ! ये गन्धर्वाः अप्सरसः इति प्रसिद्धा जातयः, ये च अराया धनहीना दरिद्राः किमीदिन बुभुक्षिताः सन्तो किमद्यामेति वाचो व्यवहर्तारः पिशाचान् पिशिताशनाः पिशाचाः, तानित्युक्तेः प्रथमान्तार्थः। सर्वा सर्वाणि नवनवतिविधानि रक्षांसि

देवविद्विषो जातयः सन्ति, तान् सर्वाण्यपि अस्मत् अस्मत्सकाशात् यावयापसारय। एभिर्गृहीता वयं न कदापि भवेमेत्याशीः। अनुष्टुप्छन्दः ॥ ५० ॥

५१

**यां द्विपादः पक्षिणः संपतन्ति हंसाः सुपर्णाः शकुना वयांसि।**
**यस्यां वातो मातरिश्वेयते रजांसि कृण्वँश्च्यावयँश्च वृक्षान् ॥**
**वातस्य प्रवामुपवामनु वात्यर्चिः ॥**

* ज्योत्स्ना * [ अन्वयः ] यां सुपर्णाः हंसाः, शकुनाः वयांसि द्विपादः पक्षिणः संपतन्ति। यस्यां रजांसि कृण्वन्, वृक्षान् च्यावयन् च मातरिश्वा वातः ईयते। ( तस्याः ) अर्चिः वातस्य प्रवाम् उपवाम् अनु वाति।

[ हिन्दी ] *वायुके अनुसार गन्धका वहना*—जिस पृथ्वी पर शोभन गति वाले हंस पक्षी तथा शकुन बताने वाले, प्रडीन-उड्डीन संडीन आदि चाल चलने वाले दो पैर के पक्षी उड़ते हैं। जिस पर धूल उड़ाता हुआ और वृक्षों को तोड़ता हुआ अन्तरिक्षचारी वायु बहता है। उस पृथिवी की गन्धवाहिनी ज्वाला ( गन्धस्वरूप ज्वाला ) वायु की स्वाभाविकगति तथा मनुष्यों द्वारा को जानी वाली अनुकूल गति के पीछे बहतो है।

* पीयूष० * यां पृथिवीं सुपर्णाः शोभनपतनाः सुगतयो हंसाः मानससरोनिवासिनश्चक्राङ्गाः, तथा शकुनाः शुभाशुभशकुननिदानभूताः वयांसि प्रडीनोड्डीनसंडीनाख्यनानागतिमन्तो द्विपादः पादद्वयवन्तः पक्षिणः संपतन्ति इतरस्माद्देशादन्यत्र देशे विचरन्ति डीयन्ते। यस्यां च पृथिव्यां स्वप्रवहणेन रजांसि पांसून् कृण्वन् विदधानः, वृक्षान् तरून् च्यावयन् पातयँश्च मातरिश्वा मातर्यन्तरिक्षे श्वसिति चेष्टत इति मातरिश्वा वातः वायुर्देवः ईयते प्रचलति। एवं वायुकृतं पृथिव्याः

अपकारमुक्त्वा तस्याः क्षमात्मकमौदार्यमाह—तस्याः पृथिव्याः अर्चिः गन्धात्मकः शोचिः, अर्च्यते पूज्यते परिचीयतेऽनेनेति, परिचायको विशेषगुणः। वातस्य वायोः प्रवां स्वाभाविकीं प्रगतिम् उपवाम् मनुष्यैः स्वानुकूल्यतयापादितां कृत्रिमां समीपगतिमनु अनु-लक्ष्यीकृत्यैव वाति प्रवहतीति क्षमागुणप्रशस्तिः। पार्थिवगन्धस्य प्रसारयितृत्वाद् वायोर्नैघण्टुकोऽत्र संस्तवः। एवमन्यत्रापि श्रूयते यथा—

'यः पृथिव्यां च्यावयन्नेति वृक्षान् प्रभञ्जनेन रथेन सह संविदानः।
रसान् गन्धान्भावयन्नेति देवो मातरिश्वा भूतभव्यस्य कर्ता।' इति।

शक्करीच्छन्दः ॥ ५१ ॥

## ५२

**यस्यां कृष्णमरुणं च संहिते अहोरात्रे विहिते भूम्यामधि। वर्षेण भूमिः पृथिवी वृतावृता सा नो दधातु भद्रया प्रिये धामनि धामनि ॥**

* ज्योत्स्ना * [ अन्वयः ] यस्यां भूम्याम् अधि अहोरात्रे कृष्णम् अरुणं च संहिते विहिते। सा भूमिः वर्षेण भद्रया आवृता वृता पृथिवी नः प्रिये धामनि धामनि दधातु।

[ हिन्दी ] *अच्छे स्थानों में निवास*—जिस पृथ्वी पर रात दिन में [ सायंकाल की ] कृष्ण सन्ध्या एवं [ प्रातः काल की ] अरुणसन्ध्या बनती है। ऐसी, उपजाऊ तथा एकवर्ष में कल्याण-कारिणी [ सूर्य की या अपनी ] आवृत्ति से युक्त पृथिवी हमें मनोरम स्थानों में रक्खें।

* पीयूष० * यस्यां भूम्यामधि उपरि अहोरात्रे अहोरात्रयोः कृष्णम् अरुणं च संहिते सन्ध्ये विहिते निर्मिते भवतः। प्रातः कालिकी अरुणोदयसामयिकी हि सन्ध्या अरुणसंहिता। सायंकालकी रात्रिसमाना हि सन्ध्या कृष्णा संहितेति शोभनतमत्वं वसुधायाः। सा एवं

स्तुता भूमिर्भावयित्री सस्यानां, वर्षेण संवत्सरात्मकेन कालेन **भद्रया** कल्याण्या **आवृता** सूर्यस्य स्वस्य वा परिक्रमणेन **वृता** युक्ता **पृथिवी देवी नोऽस्मान् प्रिये** हितकृति **धामनि धामनि** प्रदेशे प्रदेशे **दधातु** स्थापयतु। सर्वस्मिन्नपि काले शोभन एव स्थाने वयं निवासमाप्नुयामेति भावः। यद्वा—वर्षेण आन्तरिक्षेण धाराजलेन वृष्ट्या भूमिः सस्यानामुत्पादयित्री अस्ति। तथा वृता वतत इति वृत् तया वृता वर्तमानेनास्मज्ज्ञानविषयीभूतेन आवृता आवर्तनेन पृथिवीपरिक्रमणेनापि पृथिवी पृथुत्वगुणसंपन्ना अस्ति। शास्त्रोपदिष्टेनास्माभिरज्ञातेन भागेन सह तु किमु वक्तव्यमेतस्याः पृथुत्वम्। सैषा नो भद्रया मेधया प्रिये धामनि दधात्विति स्पष्टं पूर्वत्र। अतिजगतीच्छन्दः। 'भूमियामधि' 'वृता + आवृता' इति व्यूहौ ॥५२॥

## ५३

द्यौश्च म इदं पृथिवी चान्तरिक्षं च मे व्यचः।
अग्निः सूर्य आपो मेधां विश्वेदेवाश्च सं ददुः॥

* ज्योत्स्ना * [ अन्वयः ] मे इदं द्यौः च पृथिवी च अन्तरिक्षं च व्यचः। मे अग्निः सूर्यः आपः विश्वेदेवाः च मेधां सं ददुः।

[ हिन्दी ] *तीनों लोकों का ऐश्वर्य और बुद्धि*—**मेरे इस स्थानको द्युलोक पृथ्वीलोक और अन्तरिक्षलोक व्याप्त करलें, अर्थात् हमें यहाँ तीनों लोकों का सुख प्राप्त होवे। मुझे अग्नि सूर्य जल एवं विश्वेदेवता, धारणसमर्थ बुद्धि या धन प्रदान करें।**

* पीयूष० * **मे** मम **इदं** धाम स्थानम्। **द्यौ**स्तृतीयो लोकः **च** तथा **पृथिवी** जगतीतलं **च अन्तरिक्षं** मध्यमो लोकश्च **व्यचः** व्याप्नुवन्तु। तेषां व्याप्त्यात्रैव वयं लोकत्रयैश्वर्यमुपलभेमहि। तथा **मे** मह्यं स्तोत्रे **अग्निः** पृथिवीस्थानो देवः **सूर्यो** द्युस्थानो देवः **आपः** मध्यस्थाना जलदेवता अन्ये **विश्वे** सर्वे **देवाश्च मेधां** धारणावतीं

बुद्धिं, धनं वा ( निघं २।१० ) सं ददुः सम्यक् दद्यु रिति प्रार्थना। अनुष्टुप्छन्दः ॥ ५३ ॥

५४

अहमस्मि सहमान उत्तरो नाम भूम्याम्।
अभीषाडस्मि विश्वाषाडाशामाशां विषासहिः॥

* ज्योत्स्ना * [ अन्वयः ] ( हे पृथिवि ! ) अहं भूम्यां नाम उत्तरः सहमानः अस्मि। अभीषाट् विश्वाषाट् आशामाशां विषासहिः अस्मि।

[ हिन्दी ] *अपने गौरवका स्मरण*—हे पृथिवि! तुम्हारी कृपासे मैं इस भूमण्डल पर उत्कृष्ट सहनशील हूँ। समस्त शत्रुओं को पराजित करनेवाला, सबको जीतनेवाला दिशाओंका विजेता अर्थात् दिग्विजयी मैं हूँ।

* पीयूष० * देवैः प्रदत्तया मेधयान्वितः कर्तव्यनिष्ठश्च हे पृथिवि! तव प्रसादात् अहं तव स्तोता, भूम्यां सर्वस्मिन्नपि जगतीतले नाम नाम्ना यशोभिरिति भावः। उत्तरः उत्कृष्टतरत्वेनाभिमतः सहमानः मर्षयिता, परस्य गुणदोषोन्नत्यादिमनोविकृत्युत्पादकानामर्थानां सोढा धीर इति यावत्, अस्मि भवामि। अत एव 'विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीराः' इति धीरलक्षणमभिवदन्ति। प्रतीकारासामर्थ्यादेवं स्यादिति चेदुच्यते अभीषाट् परितः सपत्नानामभिभविता, विश्वाषाट् सर्वदेशीयस्यापि विरोधिनो जनस्याभिभविता, आशामाशां प्रतिदिशं विषासहिः विशेषेणाभिभविता अस्मि। उत्तमपुरुषस्याहमिति सर्वनाम्नो योगाच्चाध्यात्मिकेयमृक्। अनुष्टुप्छन्दः। 'भूमियामि' ति व्यूहः ॥५४॥

५५

अदो यद्देवि प्रथमाना पुरस्ताद् देवैरुक्ता व्यसर्पो महित्वम्।
आ त्वा सुभूतमाविशत्तदानीमकल्पयथाः प्रदिशश्चतस्रः॥

* ज्योत्स्ना * [ अन्वयः ] हे देवि ! ( त्वं ) यत् पुरस्तात् देवैः उक्ता प्रथमाना अदः महित्वं व्यसर्पः। तदानीं त्वा सुभूतम् आ आविशत्, चतस्रः प्रदिशः अकल्पयथाः।

[ हिन्दी ] *देशों की कल्पना*—हे देवि ! पृथिवि ! जब पहिले देवताओं के कहने पर विस्तृत होती हुई तुम इतनी अधिक बढ़ गई, तब तुम्हारे ऊपर अच्छे प्राणी बस गए, और उसी समय तुमनें चार दिशाओं की कल्पना की ( जिसके अनुसार उधर के रहनेवाले पूर्विया, दक्खिणी, पछांही, उत्तराखण्डी या पहाड़ी कहे जाने लगे )।

* पीयूष० * हे **देवि !** पृथिवि ! त्वं **यत्** यदा **पुरस्तात्** पूर्वं **देवैः** अमर्त्यैः **उक्ता** प्रार्थिता सती त्वं **प्रथमाना** विस्तारं लभमाना **अदः** एतावत् **महित्वं** पृथुत्वं **व्यसर्पः** विशेषेणागच्छः। देवप्रार्थनया त्वया स्वस्य महान् विस्तारः कृत इति भावः। **तदानीं** तदा **त्वा** त्वां **सुभूतं** शोभनं सात्विकभावोपेतं भूतजातम् **आ आविशत्** सन्निविष्टम्। तदा चत्वं **चतस्रः प्रदिशो** दिग्विभागान् **अकल्पयथाः** अकार्षीः। तदा हि विशालायां त्वयि वसुधायां निर्भया मनुष्या यथाभिलाषं सन्निवेशं चक्रिरे। अथ च प्राच्या-वाच्य-पाश्चात्यौ-दीच्यादिशब्दैर्दिशां नाम्ना मनुष्यांस्त्वं व्यभज इति भावः। त्रिष्टुप्छन्दः। प्रथमे पादेऽक्षराधिक्यम्। 'वि + असर्पः' इति व्यूहः ॥५५॥

५६

ये ग्रामा यदरण्यं याः सभा अधि भूम्याम्।
ये संग्रामाः समितयस्तेषु चारु वदेम ते॥

* ज्योत्स्ना * [ अन्वयः ] ( हे पृथिवि ! ) भूम्याम् अधि ये ग्रामाः, यत् अरण्यं, याः सभाः, ये संग्रामाः, ( याः ) समितयः, तेषु ते चारु वदेम।

[ हिन्दी ] *देशभक्ति*—हे जन्मभूमि ! इस भूतलपर जो ग्राम, जो वन, जो सभा, जो दंगल लड़ाई, जो समितियां हैं उन सब में हम तुमारे लिए अच्छी बात बोलें।

* पीयूष० * हे पृथिवि ! जन्मभूमे ! अस्यां भूम्यां जगतीतले अधि उपरि ये ग्रामाः संवसथाः, यच्च अरण्यं वनम्, याः सभाः शास्त्रीय-चर्चास्थलानि, ये संग्रामाः रणाङ्गणानि, संग्रामसाधनानि मल्लकला-शिक्षास्थलानि वा, याः समितयः समानगमनविधायिन्यः सामाजिक-विचारपर्षदादयश्च सन्ति तेषु सर्वेष्वपि तेऽस्मन्निवासभूतायास्तव कृते चारु शोभनं वदेम कथयेम। ग्रामादिषु सर्वेष्वपि सार्वत्रिकेषु स्थानेषु जन्म-भूम्यास्तव यशः प्रख्यापको हितकृच्च भूयासमिति त्वत्कृते चारुवचनम्। अनुष्टुप्छन्दः। 'अरण्यं' 'भूमियाम्' इति व्यूहौ ॥ ५६ ॥

५७

अश्व इव रजो दुधुवे वि ताञ्जनान्य आक्षियन् पृथिवीं यादजायत।
मन्द्राग्रेत्वरी भुवनस्य गोपा वनस्पतीनां गृभिरोषधीनाम् ॥

* ज्योत्स्ना * [ अन्वयः ] ये ( मे ) पृथिवीम् आक्षियन् तान् जनान् अश्वः रजः इव वि दुधुवे। मन्द्रा अग्रेत्वरी भुवनस्य गोपा वनस्पतीनां ओषधीनां गृभिः ( भूमिः ) यात् अजायत ( तत् अपि अश्वः रजः इव वि दुधुवे )।

[ हिन्दी ] *शत्रु तथा अपने अवगुणों का परित्याग*—जो व्यक्ति मेरी पृथिवी में स्वामित्वरूप से बस गए हैं, उन मनुष्यों को जैसे घोडा अपने अङ्गकी धूलको कंपाकर हटादेता है वैसे हटाता हूँ। हर्षानेवाली, प्रगतिदायिनी, लोककी रक्षक, वनस्पति और ओषधि ( गेहूँ चावल आदि अन्न ) को धारण करनेवाली पृथ्वी जिस कारण उनकी होगई है उस कारण को भी घोडेके लगीहुई धूलकी भाँति हटाता हूँ।

* पीयूष० * ये जनाः मम स्वामित्वेनाधिकृतां पृथिवीं ग्रामा-रण्य-सभा-सङ्ग्राम-समित्यात्मिकां पूर्वोक्तां भूमिं आद्रियन् मत्प्रातिकूल्येन निवसन्ति तान् परिपन्थिनः जनान् मनुष्यान् विदुधुवे विशेषेण कम्पयामि अपसारयामीति भावः । तत्र दृष्टान्तः—अश्वः घोटकः रजः धूलिं इव यथा धुनुते तथा विदुधुवे । किंच मन्द्रा मादयित्री मदनशीला, अग्रे त्वरयतीति अग्रेत्वरी मम प्रगतिप्रदात्री, भुवनस्य लोकस्य गोपाः पालयित्री वनस्पतीनामोषधीनां च गृभिः ग्रहणशीला पोषयित्री भूमिः यात् यस्मात्कारणात् एवमन्यस्वामिका अजायत तदपि अश्वतनुसंलग्न-धूलिकणिका इव विदुधुवे धुनोमि । छन्दसि लिटः सार्वकालिकत्वात् । जगतीच्छन्दः । प्रथमे पादेऽक्षराधिक्यं, ततो भूरिक् ।। ५७ ।।

५८

यद्वदामि मधुमत्तद्वदामि यदीक्षे तद्वनन्ति मा ।
त्विषीमानस्मि जूतिमानवान्यान् हन्मि दोधतः ॥

* ज्योत्स्ना * [ अन्वयः ] ( हे पृथिवि ! ) यत् वदामि तत् मधुमत् वदामि । यत् ईक्षे तत् मा वनन्ति । त्विषीमान् जूतिमान् अस्मि । दोधतः अन्यान् अव हन्मि ।

[ हिन्दी ] दोषोंके हटानेका फल—हे पृथिवि ! अपने दोषों के हटा देने के कारण मैं जो बोलता हूँ वह मधुर—प्रिय बोलता हूँ। जिसे मैं देखता हूँ वह मुझे चाहता है। इससे मैं दीप्तिमान् और मिलनसार हूँ। अत एव मैं कँपाने की चेष्टा करनेवाले शत्रुओं को परास्त करदेता हूँ।

* पीयूष० * स्वकीयदोषपरित्यागस्य फलमाह—हे पृथिवि ! त्वत्प्रसादादहं यद्वाक्यं वदामि तत् मधुमत् मधुरं प्रियं वचः वदामि कथयामि । यत् चाहमीक्षे अवलोकयामि तदीक्षिताः प्राण्यप्राणिजातयो मा मां वनन्ति संभजनते मामुपकुर्वन्ति । 'वन संभक्तौ' । एवं चाहं

त्विषीमान् तेजस्वी जूतिमान् प्रीतियुक्तश्च ( मिलनसार ) अस्मि भवामि। तथा दोधतो ममानिष्टचिन्तनद्वारा मामभिप्रकम्पयतः अन्यान् विद्विषः अवहन्मि नाशयामि। पुरस्ताद्बृहतीच्छन्दः। प्रथमपादे एकाक्षरन्यूनत्वान्निचृत्त्वम्॥ ५८॥

५९

शन्तिवा सुरभिः स्योना कीलालोध्नी पयस्वती।
भूमिरधिब्रवीतु मे पृथिवी पयसा सह॥

* ज्योत्स्ना * [ अन्वयः ] शन्तिवा सुरभिः स्योना कीलालोध्नी पयस्वती भूमिः पृथिवी पयसा सह मे अधिब्रवीतु।

[ हिन्दी ] *भूमि के गुण एवं उसकी कामना*—शान्तिदायिनी, गन्धवती, सुखप्रदा, बीजगर्भा, सजला, उपजाऊ, पृथिवी अन्तस्तत्त्व ( खान आदि ) के साथ मुझ से बोले, अर्थात् मैं ऐसी पृथिवी प्राप्त करूं।

* पीयूष० * मे मह्यं पयसा साधर्म्यात् स्वान्तस्तत्त्वेन सह पृथिवी अधिब्रवीतु संवदतात्। सान्तस्तत्त्वाया पृथिव्या अहमधिपो भूयासमिति पृथिव्याः संवदनम्। कीदृशी पृथिवी—शन्तिवाः शान्तिवाः शान्तिं वाति वापयति गमयतीति शान्तिप्रदा, सुरभिर्गन्धवती, स्योना सुखरूपा, कीलालोध्नी 'कील बन्धने' कीलनं कीलः। कीले अलं समर्थः कीलालः। बीजस्याविनश्वरो भागः कीलालः स ऊधसि गर्भे विद्यते यस्याः सा कीलालोध्नी। पयस्वती रसवती जलबहुला भूमिः प्रभूतसस्योत्पादयित्री इति। अनुष्टुप्छन्दः॥ ५९॥

६०

यामन्वैच्छद्धविषा विश्वकर्मान्तरर्णवे रजसि प्रविष्टाम्।
भुजिष्यं १ पात्रं निहितं गुहा यदाविर्भोगे अभवन्मातृमद्भ्यः॥

* ज्योत्स्ना * [ अन्वयः ] अन्तः अर्णवे रजसि प्रविष्टां यां विश्वकर्मा हविषा अन्वैच्छत्। यत् भुजिष्यं पात्रं गुहा निहितम् 'अभवत्', ( तत् ) मातृमद्भ्यः भोगे आविरभवत्।

[ हिन्दी ] एकदेशीयों में परस्पर स्नेह—समुद्र के भीतर जल में डूबी हुई जिस पृथ्वी को नानाविध क्रिया कुशल विष्णुदेवनें अपने कर्तव्य से ढूंढा है। उस पृथिवी का महत्व है कि भोग प्राप्ति का साधन–जो प्रेम—मनुष्य के हृदय रूपी गुफा में छिपा हुआ है वह एक माता-जन्म-भूमि-वाले व्यक्तियों के लिए अवसर पर स्वतः प्रगट हो जाता है।

* पीयूष० * अन्तरर्णवे समुद्रमध्ये रजसि जले ( निरु० ४।१९ ) प्रविष्टामन्तर्हितां यां पृथिवीं विश्वकर्मा नानाविधक्रियाकुशलो विष्णुर्देवः हविषा कर्मणा अन्वैच्छत् अन्विष्टवान् समुद्धारेति भावः। तथा यत् भुजिष्यं भोगसाधनं पात्रं स्नेहात्मकं गुहा गुहायामन्तर्हृदयावकाशे निहितमभवत् स्थापितं तिष्ठति, तत् मातृमद्भ्यः समानमातृकेभ्यः। माता चात्र पृथिवी। ततश्च तत्तद्देशीयपृथिवीजातेभ्यः भोगे व्यवहारकाले आविरभवत् प्रकाशमेति। पृथिव्या हि देशविशेषस्य यो विशेषो रूप-भाषा-गति-व्यवहारादिः सोऽन्तर्हितोऽपि समानदेशिकत्वादेकभूमिकमातृमद्भ्यः कृते कार्यकाले आविर्भवत्येव। सर्वोऽपि जनः स्वमातृदेशीयजनाय स्निह्यत्येवेति मानुषः स्वभावः पार्थिवेन महिम्ना सम्पद्यते। त्रिष्टुप्छन्दः ॥६०॥

## ६१

त्वमस्यावपनी जनानामदितिः कामदुघा पप्रथाना।
यत्त ऊनं तत्त आपूरयति प्रजापतिः प्रथमजा ऋतस्य ॥

* ज्योत्स्ना * [ अन्वयः ] ( हे पृथिवि! ) त्वम् जनानाम् आवपनी, अदितिः, कामदुघा पप्रथाना असि। यत् ते ऊनं तत् ते ऋतस्य प्रथमजाः प्रजापतिः आपूरयाति।

[ हिन्दी ] आदर्शपुरुषके द्वारा कमीकीपूर्ति—हे पृथिवि ! तुम समस्तदेशके मनुष्यों को मिलाने वाली, अखण्डित स्वरूप, कामधेनु, एवं विशाल हो। क्षुद्रपुरुषों के विचारोंसे जो देशमें कमी हो जाती है, उस कमी को कार्यविधान के अग्रगण्य ज्ञाता आदर्शपुरुष पूरा करते हैं।

* पीयूष० * यद्यपि तव महिम्ना समानदेशीयानां जनानामेव स्नेहाभिव्यक्तिः सङ्घटनं च भवति तथापि त्वमेकस्मिन्नेव प्रदेशे जनानां नानादेशनिवासिनां **आवपनी** आवपनस्थानीया संमिलनकारिणी **असि** भवसि। तथा देशभेदेन पृथक्त्वेन ज्ञायमानापि त्वं स्वरूपतः **अदितिः** अखण्डिता एकरूपा **कामदुघा** विना कमपि भेदभावं समेषां सर्वविधकामानां पूरयित्री **पप्रथाना** विशालकाया चासि। आवपनरूपत्वाच्च तव **यत् ते** क्षुद्रविचारवतां मनुष्याणां क्षोभेण **ऊनं** न्यूनं भवति धारकं तत्त्वं सत्यादिप्रथममन्त्रज्ञापितं तदूनं **ते** तव **ऋतस्य** यज्ञस्य वेदस्य कर्मणः वा **प्रथमजाः** मुख्यज्ञाता आदर्शपुरुषः, अग्रगामी वा **प्रजापतिः** प्रजापतिरूपेण समाजस्य देशस्य राष्ट्रस्य वा निर्मातृत्वेनाभिमतो महान् व्यक्तिः **आपूरयाति** रिक्तं पूरयति। साधारणजनाः स्वेष्वेव स्निह्यन्ति। तवैकस्मिन्प्रदेशेऽन्यदेशीयाः समागच्छन्ति, त्वं च तेभ्यः सर्वविधाभिलाषपूरणेन सुखयित्री भवसीति तद्देशवासिनः क्षुद्रा जना विभिन्नदेशजातेभ्यः क्षुभ्यन्ति। क्षोभेन चान्यायमाश्रित्यान्यथयन्ति कार्यजातमिति पृथिव्या धारकतत्त्वेषु क्षोभो भवति। ततश्च कश्चन निष्पक्षो गुणग्राही कर्मकुशलः प्रभावशाली विज्ञो जनस्तद्देशनिवासिषु बन्धुत्वभावं, गुणविनाशं, अन्यायकर्तृत्वं च बोधयन् क्षुद्राणामूनत्वं हृदयदौर्बल्यं च पूरयतीत्यर्थः। **अथवा** हे पृथिवि ! त्वं जनानां निवासभूता, सस्यसंपत्त्या अदीना, कामानां पूरयित्री, विशाला चासि। यच्च ते ऊनं भवति तदृतस्य सत्यस्वरूपस्य ब्रह्मणः प्रथमोत्पन्नः प्रजापतिर्देवः पूरयतीति। त्रिष्टुप्छन्दः 'तुवमस्य + आवपनी' इति व्यूहौ ॥ ६१ ॥

## ६२

**उपस्थास्ते अनमीवा अयक्ष्मा अस्मभ्यं सन्तु पृथिवि प्रसूताः ।**
**दीर्घं न आयुः प्रतिबुध्यमाना वयं तुभ्यं बलिहृतः स्याम ॥**

* ज्योत्स्ना * [ अन्वयः ] हे पृथिवि ! ते प्रसूताः उपस्थाः अनमीवाः अयक्ष्माः अस्मभ्यं सन्तु । वयं नः आयुः दीर्घं प्रतिबुध्यमानाः तुभ्यं बलिहृतः स्याम ।

[ हिन्दी ] *शुभ रत्नोंकी प्राप्ति और नियम पालन*—हे पृथिवि ! तुम से उत्पन्न, तुम्हारे समीपवर्ती–रत्न सुवर्ण आदि, रोग तथा भय दान से रहित लोहे ( की तिजोरियों ) में रखे जाने वाले हमारे लिए होवें । हम अपनी आयु को अधिक जानते हुए तुम्हारी बलि का हरण अर्थात् उपासना करने वाले बनें । [पृथिवी की स्थिति को बनाने के लिए प्रथम मन्त्र में कथित सत्यादि का आचरण करना इसकी उपासना है अतः सत्यवादी आदि बनें ] ।

* पीयूष० * एवं पृथिवीमभिष्टूय प्रार्थयते—हे पृथिवि ! देवि ! ते तव सकाशात् प्रसूताः उत्पन्नाः उपस्थाः उप समीपे तिष्ठन्तीति उपस्थाः । पृथिवीयं वसुधेति रत्नादिवसून्येव समीपवर्तिनः । अथवा उपस्थेनेव पालनीया आनन्ददायिनो वा रत्नहिरण्यादयः । अनमीवाः अमीवा अभ्यमनवान्, रोगभूतो भयदाता ( नि० ६।१२ दुर्ग ) तद्रहितोऽनमीवा । दृश्यते हि रत्नधारणेऽशुभमपि फलम् । तच्च रत्नादेव प्रभवतीति अनमीवापदेन रत्नानामशुभफलदातृत्वं निरस्यते । अयक्ष्माः अयो लोहम् । तत् क्ष्मा आधारभूमिर्येषां ते अयक्ष्माः । आयसपेटिकायां निवासवन्तः । एतेन रत्नानां बाहुल्यं काम्यते, प्रभूतत्व एव निधानोपपत्तेः । अस्मभ्यं स्तोतृभ्यः सन्तु जायन्ताम् । तथा वयं नोऽस्माकं आयुः वयः दीर्घं अत्यन्तं प्रतिबुध्यमानाः अवगच्छन्तः तुभ्यं पृथिव्यै बलिहृतः स्याम, यज्ञपूजा-

द्विविधयोपासनकर्तारो भवेम। 'गृहीत इव केशेषु मृत्युना धर्ममाचरे' दित्युक्तेः। स्वस्य जरठत्वं मत्वा पृथिव्याः पोषकानां पूर्वोक्तानां सत्य-धैर्य-मानस-यथार्थभाषण-व्रत-दीक्षा-तपो-यज्ञेत्यष्टानामनुष्ठातारो भूयास्म, येनेयमवष्टब्धा जगत उपकुर्यात्। त्रिष्टुप्छन्दः। 'तुभियमि'ति व्यूहः॥ ६२॥

६३

भूमे मात र्नि धेहि मा भद्रया सुप्रतिष्ठितम्।
संविदाना दिवा कवे श्रियां मा धेहि भूत्याम्॥

* ज्योत्स्ना * [ अन्वयः ] हे भूमे ! मातः ! दिवा संविदानामा ( त्वं ) भद्रया सुप्रतिष्ठितं नि धेहि। ( अथ ) 'मा' कवे श्रियां भूत्यां 'नि' धेहि।

[ हिन्दी ] बुद्धि लक्ष्मी और ऐश्वर्य की प्रार्थना—हे पृथ्वी माता ! सूर्य देवता से एकमत होकर तुम मुझे कल्याणकारिणी बुद्धि में स्थिर बनाये रहो, और मुझे पार्थिवभोगों की प्राप्ति के लिए लक्ष्मी और ऐश्वर्य में स्थापित करो।

* पीयूष० * सूक्तेन स्तुता चरमेणानेन मन्त्रेण पुनरपि प्रार्थ्यते—हे भूमे ! मातः ! मातृवदाराधनीये ! पालयित्रि ! पृथिवि देवि ! मा मां भद्रया कल्याण्या, पूर्वं ( ५३ मं० ) प्रार्थितया मनीषया सुप्रतिष्ठितं समादरभाजनं निधेहि संस्थापय। बुद्धिमन्तं प्रतिष्ठितं च कुर्वित्यर्थः। ननु बुद्धिर्हि सूर्यप्रसादाल्लभ्यत इति प्रात्यहिकजप्यगायत्रीमन्त्रादेव स्पष्टमिति, अत्र भूमेस्तस्याः प्राप्तिः कथं सङ्गच्छत इति चेत्—'यादृशं भक्ष्यते चान्नं बुद्धिर्भवति तादृशी। दीपेन भक्ष्यते ध्वान्तं कज्जलं च प्रसूयत' इति बुद्धेरन्नजन्यत्वादन्नस्य च भूमिजन्यत्वाद्भवति भूमेर्बुद्धिहेतुत्वम्। भूमिजातान्नमूलत्वादेव सर्वस्याप्युत्साहजातस्य प्रसिद्धत्वात् 'सर्वारम्भास्तण्डुलप्रस्थमूलाः' इति न्यायस्य जागरूकत्वाच्च। एवमपि नात्र स्वातन्त्र्येण भूमेरेव बुद्धिप्रदातृत्वमपि तु सूर्यसम्बन्धेन। अत एवोच्यते दिवा अह-

निदानभूतेन सूर्येण संविदाना संमता सती भद्रया सुप्रतिष्ठितं निधेहीत्युक्तमन्वेति । अथ च हे भूमे मातः ! मा मा स्तोतारं कवे कुः पृथिवी ततश्चतुर्थी, तदात्म्यात्पार्थिवाय भोगजाताय तत्प्राप्तय इत्यर्थः । श्रियां लक्ष्म्यां, भूत्यामैश्वर्यें च निधेहि । धनपतित्वं हि श्रियां धारणम्, धनस्य फलभोक्तृत्वं ततो यशः प्राप्तिश्चेति भूत्यां धारणं, तदुभयमपि कुर्विति भावः । अनुष्टुप्छन्दः । 'भूतियामि'ति व्यूहः ॥ ६३ ॥

*इत्याचार्य–श्रीगोपालचन्द्रमिश्रस्य कृतौ पृथिवीसूक्तस्य पीयूषकणिकाख्या व्याख्या समाप्ता ॥*

———

## सूक्तसार

❀ ज्योत्स्ना ❀ अथर्वा महर्षिके द्वारा देखेगए इस पृथ्वीसूक्त में पृथ्वीकी स्तुति तथा प्रार्थना की गई है । मन्त्रसङ्ख्या [ ६३ ] की दृष्टिसे भी महत्वपूर्ण इस सूक्तसे कई आवश्यक ज्ञातव्य विषयों पर अच्छा प्रकाश पड़ता है । पृथ्वी धर्म के द्वारा स्थिर है । वाचिक सत्य, मानसिक सत्य, गाम्भीर्य, शासनगुण, अधिकार और योग्यता के अनुरूप कर्तव्यनिष्ठा, सात्विक तपस्या, वेदाध्ययन ( शिक्षा ), और यज्ञों का अनुष्ठान इन आठ क्रियाओंसे पृथ्वी को सुस्थित करने का अधिक संबन्ध है । पहिले कभी पृथ्वी समुद्रमें जलके भीतर डूबी हुई थी । उसे वराहावतार से श्री विष्णुदेवनें निकाला है । वैदिक विज्ञानवेत्ताओं की दृष्टिसे 'वराह एमूष' नामक वायुके द्वारा पृथ्वी जलमें डूबने से बचाई जाती है । यही 'वराहकृत पृथ्वी उद्धार' इतिहास का भाव है । पृथ्वी के प्रगट होनेपर सात्विक व्यक्तियोंने इसे रहने के लिए अपनाया । उसी समय

पृथ्वीमें चारों दिशाओं की अर्थात् चारों दिशाओं के देशों की कल्पना की गई। एक देशके निवासियों का आपसमें मेल होना पार्थिव आकर्षण का प्रभाव है, परन्तु इस आकर्षण से आन्तरिक व्यवस्थाओं में अनौचित्य हो जाना पृथिवी में शिथिलता अर्थात् कमी आजाना है। आदर्श पुरुषों को हानिकारक अनौचित्य को हटाना चाहिए। कर्मठता रागद्वेषविहीनता, बुद्धिमत्ता, निष्पक्षता आदर्श पुरुषों का विशेष गुण है। समस्त देश निवासियों को आपसमें सहयोग सद्भाव रखना चाहिए। पृथ्वीमें स्थान के अनुरूप अनेक धर्म और भिन्न भिन्न भाषाएं हैं। सूक्त के स्तोतानें समग्र भाषाओं या समस्त वाङ्मय के ज्ञाता बनने की प्रार्थना की है। यह पृथ्वी मनुष्य पशु पक्षी सभी का निवासस्थान है। बलप्रद गेहूँ जौ चावल-आदि अन्न, तथा रोगनाशक काष्ठौषधियों की जननी है। सुवर्ण रत्न आदि आनन्ददायक रक्षणीय वस्तुओं को धारण करनेवाली है। किसी पृथ्वी के गर्भ की वस्तुको निकालने के बाद पृथ्वी की क्षतिपूर्तिका भी ध्यान रखना चाहिए। सत्कर्म और कालचक्र से क्षति पूर्ति हुआ करती है। पृथ्वी अपने देश वासियों के अच्छे बुरे कार्य द्वारा हर्ष या शोकसे कम्पित होती है हर्षकम्पन में अत्यधिक लाभ, एवं बुरेकार्यों के शोककम्पन में अत्यधिक हानि होती है। साधारणतया पृथ्वी अच्छे बुरे सभी व्यक्तियों का सहन करती है। इसकी क्षमाशीलता सराहनीय है। वायु अपनें प्रचण्डवेग से पृथ्वी के वृक्षों को ध्वस्त कर देता है। पृथ्वी की मिट्टी को उडाता है, फिर भी पृथ्वी अपने विशेषगुण गन्ध का वायुके द्वारा प्रसार करती है। पृथ्वीपर पापनाशक अनेक पुण्यपुरियां है। इसपर रातदिन समानता से बहनेंवाले अनेक झरने नद नदी बहते हैं। पृथ्वीका उपयोग

यज्ञादि सत्कार्य में होना चाहिए। यह समस्त ब्रह्माण्ड के प्राणियों की जीवनदायिनी है देवता और ऋषियों की पृथ्वीपर बहुत कृपा रहती है। देवता इसकी सावधानी से रक्षा करते हैं। सप्तर्षियोंने इस पृथ्वीपर ही तपश्चर्या और अनुष्ठान करके महत्व प्राप्त किया है। इस सूक्तमें उर्वराभूमि के सम्बन्ध में विशेष बातें बताई गई हैं। बीज को सहनेवाली, अधिक उपजाऊ, वेद एवं यज्ञों से समृद्ध, रसीले पुष्ट एवं चिकने अन्न की जननी भूमि प्रशस्त है। ऐसी सर्वत्र नहीं होती अतः 'विसृग्वरी' हैं। हिन्दीमें प्रसिद्ध पथरीली, कंकड़ीली, बलुई तथा दूमट और चोपर मटियरी करैली एवं बलधूसरी आदि भूमि के भेदों की इसमें चर्चा है। नदीमातृक (जिनमें नदी के जल से खेती होती है) देवमातृक (जहां बरसात के पानी से खेती होती है) और कृष्टपच्य (जहां कुँए तालाब के पानी को खींचकर खेती की जाती है) देशों का भी निर्देश मिलता है। पृथ्वी के मध्य में अग्नि का निवास है। अग्नि सभी लोकों में है, तथापि पार्थिव व्यक्तियोंमें स्पष्ट है। पृथ्वी हमारी माता है। पर्जन्य—जलदेवता—हमारा पिता है। हम उनके पुत्र हैं अतः पृथ्वी से हम प्रार्थना एवं उससे लाभ उठाने के विशेष अधिकारी हैं। पृथ्वी का विशेष गुण गन्ध है जिसका संचार सभी पार्थिव पदार्थों में है। गन्ध का आदर गन्धर्व एवं अप्सरस् नाम की देवयोनियां तथा सभी देवता करते हैं। हम पृथ्वी निवासियों को यह ध्यान रखना चाहिए कि चलते फिरते उठते बैठते हमारे द्वारा पृथिवी का अपकार न होवे। अनेक सुव्यस्थित कारबार चलाने की इच्छा रखनी चाहिए। सर्पादि दुष्ट जन्तु एवं हिंसक सिंहादिकों से से बचना चाहिए। इस सूक्तसे मनुष्य, रथ और बलगाड़ी इनके लिए पृथक् पृथक मार्ग का

परिचय मिलता है। सत् कर्तव्यनिष्ठ के लिए पृथ्वी अपना स्वरूप स्पष्ट कर देती है। मनुष्यों पर गन्धर्व, अप्सरस् राक्षस एवं पिशाचों का आक्रमण होता है इससे बचना चाहिए। अपनी उन्नति की चेष्टा रखनी चाहिए। अपने दोषों को घोड़े के अंग में लगी धूली की भाँति हटा देना चाहिए। शत्रुओंसे डरना नहीं चाहिए। अपने कर्तव्य से अपनी वाणी, एवं दृष्टि में आकर्षण, प्रभाव तथा मिलनसारता लानी चाहिए। गुणी मनुष्य के गुणों का सर्वदा और सर्वथा आदर करना चाहिए। यह आदर गुणी व्यक्ति का नहीं है अपि तु उस गुण का पृथ्वी में सुस्थिर बनाने के लिए गुण का आदर है। अपनी कमी को सर्वदा देखना चाहिये। सामाजिक कार्य में व्यक्तिगत राग द्वेष को सर्वथा भूल जाना चाहिए। पृथ्वी और उसके सहयोगी सूर्य की सदा उपासना करनी चाहिए। कर्तव्य-निष्ठासे हमें सद्भाव, शुभरत्न, प्रतिष्ठा, अच्छी बुद्धि, धन एवं ऐश्वर्य की प्राप्ति होती है।

पृथ्वीसूक्तामिधं रत्नं वेद-रत्नाकरोद्धृतम्।
मिश्र-गोपालचन्द्रस्य ज्योत्स्नया राजतां हृदि॥

॥ इति पृथिवीसूक्तं समाप्तम् ॥



पुस्तकप्राप्तिस्थानम्—२० नीचैर्ब्रह्मपुरी काशी ?;

*हिन्दी एवं संस्कृतके ख्यातिप्राप्त लेखक, उत्कृष्ट ग्रन्थप्रणेता,*
*एवं कलापूर्ण सम्पादक—*

# याज्ञिक आचार्य पं० श्रीगोपालचन्द्रमिश्र

## [ वेद—धर्मशास्त्र—मीमांसादर्शनाचार्य ] की कृतियाँ

१—सूक्त-रत्न-सङ्ग्रहः— आपकी सेवामें उपस्थित

इसमें—

२—विष्णुसूक्तम् १ [ ऋ० १।१५६ सू० ] ज्योत्स्ना हिन्दी सायणभाष्य सहित
३—विष्णुसूक्तम् २ [ ऋ० ७।१०० सू० ] ज्योत्स्ना ( हिन्दी ) सायण-भट्टभास्करभाष्यसहित
४—वरुणसूक्तम् (ऋ० १।२५) ज्योत्स्ना (हिन्दी) सायण-स्कन्दस्वामिभाष्यसहित
५—उषःसूक्तम् (ऋ० १।११३) „ „ „
६—शान्त्यध्यायः (य० ३६ अ०) „ महीधर—वेदार्थदीपिकाभाष्यसहित
७—पृथिवीसूक्तम् (अ० १२।१) „ पीयूषकणिकाभाष्यसहित
८—धर्मका स्वरूप विचारपूर्ण निबन्ध १)
९—हमारा हिन्दूधर्मशास्त्र पृ. सं० ८०० (यन्त्रस्थ)
१०—हिन्दू कोड पर एक दृष्टि ॥)
११—हिन्दू संस्कृतिका दृष्टिकोण ॥)
१२—रुद्रस्वाहाकारपद्धतिः ≡)
१३—यज्ञरहस्य ।)
१४—शिखामुण्डननिर्णयः [उपनयनमें शिखाच्छेदनविचार] दुष्प्राप्य
१५—उपाकर्म-श्रावणी ( रक्षाबन्धन ) निर्णयः –)
१६—श्रीश्यामस्तवसङ्ग्रहः –)
१७—खाटूके श्रीश्यामजी—तीनों परिच्छेद १)
१८—खाटूके श्रीश्यामजी—प्रथम इतिहासपरिच्छेद ( हिन्दी ) ॥)
१९—स्तुतिकुसुमावलिः दुष्प्राप्य
२०—A Review Of The Hinducode Bill =)

प्राप्तिस्थान—'विक्रय' २० नीचीब्रह्मपुरी बनारस १.

